द्वादशे वर्षे ] आषाढ़ श्रावण भाद्रपद पूर्णिमाः १६६३ [ १-२-३ संख्याः




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

Sanctioned by the Directors of Public Instruction United Provinces and Bombay Presidency for use in Schools and Colleges.

सम्पादकः—

श्रीमान् अन्नदाचरणशर्मा तर्कचूड़ामणिः

[ महामहाध्यापकः, महामहोपाध्यायः ]

—:*:—

उद्गम-स्थानम्—

श्रीभारतधर्ममहामण्डलम्, ( जगत्गंज ) काशी ।

—:o:—

वार्षिकं मूल्यं मुद्रात्रयम् ।

संरक्षकेभ्यः ५) असमर्थेभ्यःछात्रेभ्यः १)
वैदेशिकेभ्यश्च ६) पुस्तकालयेभ्यश्च १)

# विषय सूची ।

# सूर्योदयः ।

द्वादशे वर्षे आषाढ़-श्रावण-भाद्रपद-पूर्णिमाः १९९३ १-२-३ संख्याः

## सम्पादकीया अभिप्रायाः ।

—:o:—

### अस्माकं द्वादशवर्षम् ।

परमकारुणिकस्य भगवतो विश्वनाथस्य परमानुग्रहेण सूर्योदयोऽयं स्वीयायुष एकादशं वर्षमतिवाह्य साम्प्रतं द्वादशे वर्षे पदं निदधातति नितरां प्रमोदमेति मानसम् । संस्कृत-सरस्वत्याः सनातनधर्मस्य प्राचीनार्य-सभ्यतायाः हिन्दू-संस्कृतेश्च संरक्षणं प्रचारणं 'सूर्योदयस्य' प्रधानमुद्देश्यमस्ति । तत्र सूर्योदयेन बहूपकृतम् । अनेन बहूनां विद्यार्थिनां विदुषां च हृदि संस्कृतभाषायां प्रचुरं प्रेम प्रादुर्भावितम्, सुदृढ़ो विश्वासश्च समुत्पादितः प्राचीन-सभ्यतायाम् । भगवतः सनातनधर्मस्य रक्षणार्थं मानवानामधिमानसं समुत्पादिता सुदृढ़ा श्रद्धा । एतेन यथा शक्यं प्रतिकूलेऽपि समये किं किं कृतमिति तत्र विद्वांस एव प्रमाणम् ।

सूर्योदयद्वारा सनातन-धर्मस्य संस्कृत-विदुषाञ्च यादृशीं सेवां कर्तुमस्माकमभिलाषोविद्यते स सम्प्रति कुटिलकरालकलेः प्रभावात् न सफलितो भवति । यथासमयं सूर्योदयस्य प्रकाशनं प्राथमिकं कर्तव्यं विद्यते, तदपि नानाविधैरन्तरायैः वर्षेऽस्मिन् न जातम् । एतदर्थं वयं भृशं दुःखिताः स्मः । आशास्महे सूर्योदयस्य संरक्षका ग्राहकानुग्राहकाः पाठका अन्ये च संस्कृत-भाषाश्रद्धालवो विलम्बस्य कृते क्षमां विधास्यन्तीति ।

सूर्योदयाविर्भावदिनादारभ्य अद्ययावत् ये किल विद्वांसो विद्यार्थिनश्च संस्कृतभाषाप्रगाढ़प्रेम्णा बहुविधं द्रव्याभावादिक्लेशं सोढ़ं सोढ़ं सूर्योदयस्य ग्राहकत्वं स्वीकृत्य गीर्वाणवाण्याः प्रचारणे परमं साहाय्यं कृतवन्तः सन्ति, ये च बहुसंख्यकाः सुधियः स्वयं ग्राहकाः सन्तोऽन्यानपि निजान् आत्मीयान् सुहृदः छात्रादीन् अस्य ग्राहकान् विधाय महतीं कृपां प्रकटितवन्तः । अपरे च लेखक-महानुभावा विद्यमानेऽपि समयाभावे यथासमयं प्रबन्धप्रदानेन 'सूर्योदय' साहा-

ध्ययं विहितवन्तः सन्ति, तेभ्यः सर्वेभ्यो विद्वद्भ्यो ग्राहकानुग्राहकेभ्यो लेखकेभ्यः संवाददातृभ्यश्च सादरं सबहुमानपुरस्सरं च अनेकान् धन्यवादानर्पयामः । विश्वसिमश्च यदग्रे श्रीविश्वनाथस्यानुग्रहेण सर्वान् वर्तमानविघ्नसमुदायान् अतिलङ्घ्य यथापूर्वं सूर्योदयो ग्राहकाणां सन्निधौ यास्यतीति ।

———:o:———

# वेदतत्त्वम् ।

इह विद् धातोः करणे घञि वेत्ति सूचिततत्त्वमनेनेति वेदः ( साधारणोऽर्थः ) वेद्यन्ते ज्ञाप्यन्ते धर्मार्थकाममोक्षाः ( पुरुषार्थचतुष्टयं ) येनासौ ( वेदः ) आहो इष्टप्राप्त्यनिष्टपरिहारादिलौकिकालौकिकोपायो येन वेद्यतेऽसौ वेदः । इति

तत्र मन्त्रब्राह्मणयोर्वेदनामधेयम् इति हि अद्यावधि प्रसिद्धिरस्ति । मन्त्रभागो ब्राह्मणभागश्चोभावेव वेदशब्देनोच्येते प्राक्तनै विद्वद्भि र्गृह्येते च । 'मन्त्रब्राह्मणमित्याहुः' ( बौ. गृ. ) 'आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि' ( आपस्तम्बः ) स्वामिदयानन्दानुयायिनस्तु मन्त्रभागमात्रस्यैव वेदत्वमुररीकुर्वन्ति । तत्र ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति चत्वारो वेदाः ।

पादै श्छन्दोभिश्च बद्धा ऋचः ( नियतपादच्छन्दा ऋक् ) अनियताक्षराणि अपादबद्धानि यजूंषि । प्रगीता मन्त्राः सामानि छन्दोबद्धा ऋग् विशेषा एवाथर्वाङ्गिरसः, इति नियमतो मन्त्राणां छान्दसिकरूपानुसारेण पठनप्रणाल्यानुकूल्येनैव वेदानां नामचतुष्टयं विद्यते । प्रतिपाद्यविषयभेदो हि तत्राकिञ्चित्करः प्रतिभाति । विषयधिया तु कर्मोपासनाज्ञानभेदतस्त्रयो भेदाः ।

सामवेदे हि ७८ अष्टासप्ततिरेव मन्त्रा ऋग्वेदमन्त्रेभ्यो भिन्नाः सन्ति । अपरे सर्वेऽपि मन्त्राः तदीया एव, केवलं गानस्वरेण गीयमानतया ते साममन्त्रा उच्यन्ते । यश्च तद्विरहिताः ते ऋग्मन्त्रा भवन्ति । यदि गानस्वरस्वरूपता ततो दूरीक्रियेत चेद् तर्हि तु ऋग्वेदस्यैव शाखैका सामवेदोऽपि स्यात् ।

स चायं चतुर्धा वेदविभागः श्रीव्यासदेवेन कृष्णद्वैपायनेन सम्पादितः । एतेनैव हेतुना स वेदव्यास इति संज्ञामृच्छति ।

पराशरात् सत्यवत्यामंशांशकलया प्रभुः
अवतीर्णो महाभाग ! वेदं चक्रे चतुर्विधम् । १।३।६।४१

तत्र होतुः कृते ऋग्वेदः । अध्वर्यवे यजुर्वेदः । उद्गात्रे सामवेदः । ब्रह्मणे अथर्ववेदः । पञ्चमस्य महाभारतस्य वेदकल्पस्य कर्ता वेदव्यासो भगवान् वेदान् चतुर्धा विभज्य चतुर्भ्यः स्वशिष्येभ्यः प्रादात् । ते च क्रमशः—

तत्रर्ग्वेदधरः पैलः सामगो जैमिनिः मुनिः ।
वैशम्पायन एवैको निष्णातो यजुषामुत ॥
अथर्वाङ्गिरसामासीत्सुमन्तुर्दारुणो मुनिः ।
इतिहासपुराणानां पिता मे रोमहर्षणः ॥

एवं शिष्यपरम्परया वेदानामध्ययनं प्रववृधे शाखाभेदेऽपि शिष्यभेद एव कारणम् । यथा—अध्ययन-सम्प्रदायप्रवर्तकानामेषां शाकलादीनामाचार्य्याणां प्रवचनभेदः शाखाभेदव्यवहारे कारणम् । यथा याज्ञवल्क्यस्य मध्यन्दिनादयः पञ्चदश शिष्या बभूवुस्तेषु मध्यन्दिनेन या संहिता स्वशिष्येभ्योऽध्यापनेन दत्ता सा माध्यन्दिनी शाखा निगद्यते । कण्वेनाध्यापिता काण्वशाखोच्यते । एवमपरेणाध्यापिता अन्या शाखा जाता । फलतोऽध्यापनपद्धत्या वेद-वाक्येषु यः पाठभेदो जातस्तमेव भेदमाश्रित्य शाखापरम्परा प्रवृत्ता ।

यजुर्वेदो हि कृष्णशुक्लभेदेन वेदद्वयं गण्यते तत्रेद्वश इतिहास उपलभ्यते विष्णुपुराणे । तद्यथा केनापि पापेनाक्रान्तो वैशम्पायनो महर्षिः प्रायश्चित्तं चरितुमनाः स्वशिष्यान् याज्ञवल्क्यादीन् प्रायश्चित्ते साहाय्यमाधातुमुक्तवान् तत्र याज्ञवल्क्यः साहङ्कारमन्यान् सतीर्थानवज्ञायैकाकी गुरोः साहाय्यं दातुं सन्नद्धो जातः । तदीयमहङ्कारमन्यब्राह्मणानादरञ्चासहमानो गुरुस्तं शशाप । ततश्च सूर्य्याराधनेन शुक्लयजुर्वेदोपलब्धि र्याज्ञवल्क्येन कृता । तत एव शुक्लकृष्णेति संज्ञाद्वयं जातम् । अयमपि भेदः शाखाभेदवदेव ज्ञेयः ।

अस्तु, वेदानां शाखास्वपि भेदो विद्यते । निम्नप्रकारेण पुस्तकेषु शाखानां भेदा दृश्यन्ते—

| | मुक्तिकोपनिषदि | महाभाष्ये | अहिर्बुध्न्यसंहितायाम् |
|---|---|---|---|
| ऋग्वेद-शाखा | २१ | २१ | २१ |
| सामशाखा | १००० | १००० | १००० |
| यजुःशाखा | १०९ | १०१ | १०१ |
| अथर्वशा० | ५० | ९ | ५ |
| | ११८० | ११३१ | ११२७ |

सम्प्रति ऋग्वेदस्यैकविंशतिशाखासु द्वे एव शाखे समुपलभ्येते । १ केवला, २ वाष्कलेति । यजुर्वेदस्य एकोत्तरशतशाखासु कृष्णस्य १ तैत्तिरीया, २ काठी, ३ मैत्रायणी चेति तिस्रः । शुक्लस्य साद्धैव १ माध्यन्दिनी अर्द्धा काण्वी चेति । सहस्रसाम-शाखासु तिस्रः समुपलभ्यन्ते । १ कौथुमी, २ जैमिनीया, ३ रायणायनीया चेति । अथर्ववेदस्य च, १ पैप्पलादसंहिता, २ शौनकसंहितेति द्वे एवोपलभ्येते । अन्याः सर्वा अपि शाखा लुप्ताः सन्ति । आसु शाखासु मन्त्राणामपि न्यूनाधिक्यं विद्यते ।

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अध्यायाः | १, | २, | ३, | ४, | ५, | ६, | ७, | ८, | ९, | १०, | ११, | १२, | |
| काण्वी | ५०, | ६०, | ७५, | ४८, | ५५, | ५०, | ४०, | ३२, | ५५, | ३१, | ५६। | ५४० | |
| माध्य० | ३१, | ३४, | ६३, | ३७, | ४३, | ३७, | ४८, | ६३, | ४०, | ३४, | ८३। | ५१३ | |

तत्रैव सप्तविंशतिमन्त्राणामान्तर्य्यं परस्परं शाखयोरनयोर्दृश्यते । एवं सामवेदस्य कौथुमीशाखाया आर्चिकद्वयमेवास्ति । परन्तु रायणीयानां आर्चिकत्रयम् विद्यते ।

वेदानां मन्त्रसंख्यासु तज्ज्ञानां नास्ति मतैक्यम् । ऋग्वेदे कियन्तः १०५८० मन्त्रसंख्यां वदन्ति । केचन १०४६६, केऽपि १०४०४, अन्ये १०४८०, चरणव्यूहादिमतेन १०४४० मन्त्रसंख्याभेदो दृश्यते । एवमथर्ववेदेऽपि ६०१५ एके । १२३०० अपरे । ५९७७ इयं संख्या अजमेरस्थ-मुद्रणालयमुद्रितार्थववेदपुस्तके विद्यते ।

ऋग्वेदस्यैतरेयं कौषीतकी चेति ब्राह्मणद्वयम् । यजुर्वेदस्य शतपथब्राह्मणम् सामवेदस्य ताण्ड्यं, षड्विंशं मन्त्रं, दैवतं, आर्षेयं, सामविधानं, संहितोपनिषद्, वंशजैमिनी इति अष्टौ ब्राह्मणानि सन्ति । अथर्ववेदस्य गोपथब्राह्मणमित्येकमेवोपलभ्यते ।

सम्प्रति ऐतिहासिका ऋग्वेदस्य सर्वाभ्यर्हितत्वम् प्राचीनत्वञ्च प्रख्यापयन्ति । तत्र दश मण्डलानि सन्ति प्रतिसूक्तं १२ द्वादश विंशतिस्ततोऽधिकाश्च मन्त्राः सन्ति । तत्र मन्त्रद्रष्टारो महर्षय इति पूर्वाचार्य्याः, आधुनिकास्तु तेषां मन्त्राणां कर्तॄनेव तान् ऋषीनभ्युपगच्छन्ति । परन्तु इति तेषां प्रौढ़िवादमात्रम् ।

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी नित्या यतः सर्वाः प्रवृत्तयः ।
स्वयम्भुरेष भगवान् वेदो गीतस्त्वया पुरा ।
शिवाद्या ऋषिपर्यन्ताः स्मर्तारो नास्य कारकाः ।
न कश्चित् वेदकर्ता च वेदस्मर्ता पितामहः ।

तथैव धर्मं स्मरति मनुः कल्पन्तरान्तरे।
अस्य वेदस्य सर्वज्ञः कल्पादौ परमेश्वरः।
व्यञ्जकः केवलं विप्राः! नैव कर्ता न संशयः।
युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा।

इत्यादि महर्षिवाचोभिर्वेदानां नित्यत्वं ऋषीणाञ्च द्रष्टृत्वमेव निर्धारितमिति।

विप्राणां वेदतत्त्वसमीक्षणमावश्यकम्। भगवता मनुना तु वेदमाहात्म्यं मुक्तकण्ठमुदीरितं विद्यते तथाहि——

चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक्,
भूतं भव्यं भविष्यञ्च सर्वं वेदात् प्रसिद्ध्यति।

चाणक्येनापि नीतिविदुषाऽभिहितम्—

"व्यवस्थितार्य्यमर्य्यादः कृतवर्णाश्रमस्थितिः
त्रय्या हि रक्षितो देशः प्रसीदति न सीदति।"

तेषां वेदानामिमा अधोनिर्दिष्टाः प्रसिद्धा उपनिषदश्चोपलभ्यन्ते——

१ ईशोपनिषद् यजुर्वेदस्य चत्वारिंशत्तमोऽध्यायः। २ केनोपनिषद् ( तवलकरेतिनामान्तरम् ) सामवेदस्य। ३ कठोपनिषद् यजुर्वेदीया। ४ प्रश्नोपनिषद् अथर्ववेदीया। ५ मुण्डकं ६ माण्डूक्यञ्च तदीये एव। (गौडपादाचार्य्यस्य माण्डूक्यकारिका यस्यां शाङ्करं भाष्यमस्ति।) ७ तैत्तिरीयोपनिषद् कृष्णयजुर्वेदीया। ८ ऐतरेयोपनिषद् ऋग्वेदीयब्राह्मणमध्यगा। ९ छान्दोग्योपनिषद् सामवेदीया ( शाण्डिल्योपनिषदिहैवान्तर्भूता। १० बृहदारण्यकोपनिषद्—शुक्लयजुर्वेदस्य शतपथब्राह्मणमध्यगा।

एतदतिरिक्ताः श्वेताश्वतर-कौषीतकी-जाबाल-कैवल्य-नारायणबृहज्जाबाल-गर्भ-वज्रसूचीत्याख्या अष्टौ प्रसिद्धाः सन्ति। आभ्योऽप्यतिरिक्ता ३४ लघीयस्यः सन्ति। या मेलयित्वा द्वापञ्चाशद् उपनिषदो भवन्ति। केऽपि द्वाषष्टि रुपनिषद इत्यभिदधति। कियन्तश्च अष्टोत्तर शतमुपनिषदो निगदन्ति। केऽपि सार्द्धशतमुपनिषद उद्गिरन्ति। इत्येवमनन्ता अप्युपनिषदः सम्भवन्ति। यदि प्रतिशाखमुपनिषदो भवेयुश्चेदित्थमनन्ता गणना स्यात्।

ऋचाम् १ एकविंशतिः यजुषां १०९ नवोत्तरशतम्। साम्नां सहस्रम् १००० अथर्ववेदस्य ५० पञ्चाशद् इति प्रतिशाखं स्युः। अष्टोत्तरशतन्तुमुक्तिकोपनिषदि उपनिषदां नाम गणितं विद्यते। अत्र प्राचीनपद्यान्यपि उपलभ्यन्ते। तथाहि—

ईशकेनकठप्रश्नमुण्डकमाण्डूक्यतित्तिरिः ।
ऐतरेयञ्च छान्दोग्यं वृहदारण्यकं तथा
ब्रह्मकैवल्यजावालौ श्वेताश्वो हंस आरुणिः ।
गर्भो नारायणो हंसो विन्दुनादशिरःशिखा ।
मैत्रायणी कौषीतकी वृहज्जावालतापनी
कालाग्निरुद्रमैत्रेयी सुवालक्षुरिमन्त्रिका
सर्वसारं निरालम्बं रहस्यं वज्रसूचिकम् ।
तेजोनादध्यानविद्यायोगतत्त्वात्मबोधकम् ॥
परिव्राट् त्रिशिखी सीता चूडानिर्वाणमण्डलम् ।
दक्षिणा शरभं स्कन्दं महानारायणाह्वयम् ।
रहस्यं रामतपनं वासुदेवञ्च मुद्गलम् ।
शाण्डिल्यं पैङ्गलं भिक्षुं महच्छारीरिकं शिखा ।
तुर्य्यातीतं च संन्यासं परिव्राजाक्षमालिका ।
अव्यक्ताक्षरं पूर्णसूर्य्यादयध्यात्मकण्डिका ।
सावित्र्यात्मा पाशुपतं परब्रह्मावधूतकम् ।
त्रिपुरा तपनं देवी त्रिपुराकठभावना ।
हृदयं कुण्डली भस्म रुद्राक्ष गण दर्शकम् ।
तारसार महावाक्यं पञ्च ब्रह्माग्निहोत्रकम् ।
गोपालतापनं कृष्ण याज्ञवल्क्यं वराहकम् ।
शाठ्यायनी हृदग्रीवं दत्तात्रेयं च गारुडम् ।
कालि जावालि सौभाग्यं रहस्यं ऋचमुक्तिका ।

इत्थं संक्षेपतो वेदतत्त्वं नीरूपितमस्माभिर्यस्य ज्ञानम् सर्वेषामेव संस्कृतज्ञानां विशेषतो जिज्ञासूनामुपकाराय समीचीनं भातीति निगद्य विरम्यते ।

---

## संस्कृत-रत्नाकरस्य वेदाङ्कः ।

विद्यावाचस्पति-जयपुरराज्य-प्रधानपण्डित-श्रीमधुसूदनशर्ममैथिल-महोदयानां सप्ततितम-वर्षप्राप्ति-शुभावसरेऽभिनन्दनार्थं प्रकाशितो विद्यते ।

अस्य म० म० पण्डित गिरिधरशर्मचतुर्वेद पण्डित श्रीसूर्यनारायण शर्मशास्त्रि-व्याकरणाचार्य कविशिरोमणि भट्ट श्रीमथुरानाथशास्त्रि साहित्याचार्य

अभृतयश्चत्वारः सम्पादकाः सन्ति । श्रीमधुसूदनाभिनन्दन-समितिः प्रकाशिका विद्यते ।

संस्कृत-साहित्य-सम्मेलनस्य मुखपत्रस्य रत्नाकरस्यायं वेदाङ्कोऽद्वितीयो विशेषाङ्को विद्यते । एतस्य बाह्याभ्यन्तरिक-समालोचनायान्तु समयोऽपेक्ष्यते । सम्प्रति संक्षेपेणास्याङ्कस्य परिचयमेव दातुं वयं प्रवृत्ताः स्मः ।

अङ्कोऽयं वेदविषयकविविधजिज्ञास्यतत्त्वविभूषितोऽद्यावधिवैदिकगवेषण-योपलब्धवस्तुविन्यासविमण्डितः साधु सम्पादितो विद्यते ।

अत्यभ्यर्हितानां मान्यविदुषां लेखसूची दृष्ट्वैव विषयावगतिर्जायते । उदाहरणतो यथा महामहोपाध्यायानां श्रीगोपीनाथ कविराज एम० ए० महोदयानां वेदस्वरूपजिज्ञासाविषयको लेखः पाठकानां वेदविषयक-स्वरूपावजिज्ञासां साधु समपाकरोति । तथैव प्राक्तनार्य्याणामाद्या वसतिरिति वेदतीर्थ नरदेवशास्त्रिभिर्लिखितो लेखोऽपि संक्षेपेणैवेतिहासगन्धं सूचयन् वक्तव्यमेव वक्ति । एवमेवात्यन्तोपयोगिभिर्लेखैर्विमण्डितोऽयमङ्कः सम्पादकानां साधु वैदुष्यं द्योतयति ।

चित्रसूचीप्रारम्भे सर्वप्रथमां मयूरवाहिनीं सरस्वतीं दृष्ट्वा सर्वतन्त्र-स्वतन्त्राणां महामहोपाध्यायानां स्वर्गतानां शिवकुमारशास्त्रिणां प्रतिकृतिमवलोक्य चाभिनन्द्यमानानां श्रीमधुसूदनमिश्रमहोदयानाञ्च विविधाकारां तारुण्य-वार्द्धक्यकालिकप्रतिकृतिञ्च निभाल्य चेतश्चमत्कृतिमाचामति । एवं विषय-चित्रादि विविधोपादेयलेखरत्नसम्भृतोऽयं वेदाङ्कः संस्कृतपत्रेषु नवीनं युगमातन्वन् सर्वेषामेव पाठकानां दृष्टिमावर्जयति । एवं सर्वसामग्रीसम्भृतस्य मूल्यं सार्धरूप्यकद्वयमस्ति । रत्नाकरकार्यालय जयपुर सिटी इति प्राप्तिस्थानम् ।

——:०:——

## केन्द्राध्यक्षा विनिवेद्यन्ते ।

अस्मिन् वर्षे अखिल-भारतवर्षीय-धार्मिकाध्यात्मिक-संस्कृतविश्वविद्यालयस्य तथा तच्छाखाभूताया आयुर्वेदसम्मिलन्याश्च सर्वा अपि परीक्षाः चैत्रकृष्णैकादशी-बुधवारतश्चतुर्दशी-शनिवासरं यावत् तदनुसारेण—( ता० ७।४।५७ से ता० १०।४।५७ तक ) समाप्तिं गमिष्यन्ति ।

आवेदनपत्राणि च सम्भृत्य सशुल्कानि फाल्गुनकृष्णचतुर्थीं सौम्यवासरं यावत् ( ता० १।३।३७ ई० तक ) कार्य्यालये प्रेषणीयानि । आवेदनपत्राणि च प्रधानकार्य्यालयतः शीघ्रं पत्रं प्रेष्य ग्राह्याणि ।

प्रत्येक केन्द्रस्य सर्वाण्यपि आवेदनपत्राणि अन्यस्मिन् पत्रे परीक्षार्थिनां पृथक् नामोल्लेखेन शुल्कोल्लेखेन परीक्षानामोल्लेखेन सहैकदैव नियततिथेः प्रागेव सुस्पष्टाक्षरै विलिख्य प्रेषणीयानि निम्नसंकेतेन । उपनियामक-संस्कृत-विश्वविद्यालय, महामण्डलभवन जगतगंज, बनारस कैंट ।

—— :०: ——

# आरोग्य प्रकाशः ( गुलरगुणविकाशः )

चम्पारण्य मण्डलान्तर्गत—रत्नमाला वगहानिवासिभिः पं० श्रीचन्द्र-शेखरधरमिश्रमहोदयै रायुर्वेदाचार्य्य-चिकित्सकचूडामणिभिः संस्कृतायुर्वेद-विज्ञाः के न परिचिताः सन्ति । तैर्हि महोदयैरुदुम्बर-गुणाविष्कारेण भारतीय-चिकित्सापद्धतौ युगान्तरमेवोपस्थापितं विद्यते । सम्प्रति टिञ्चरस्थाने तैराविष्कृतमुदुम्बरसारमेव सर्वत्र प्रधानायुर्वेदचिकित्सालयेषु प्रयोक्तुमादिशन्ति तत्त्वज्ञा म०म० गणनाथ सेन सरस्वती प्रभृतय आयुर्वेदविज्ञा विद्वांसः स्वयमपि यथावसरं तत्प्रयोगमनुतिष्ठन्ति ।

उदुम्बरसाराविष्कर्तृणां मिश्रमहोदयानान्तु डिण्डिमनादो विद्यते यत् सर्व-त्रैव सर्वरोगेष्वपि अनुपानभेदेनोदुम्बरसारप्रयोग एव रोगापनयनं कर्तुं शक्नोति । बहूनामत्र विषये सम्मतिरपि प्रकाशिता विद्यते । सम्प्रति उदुम्बरसारगुणमुग्धै-र्विहारसंस्कृतएशोसियेशनपरीक्षासदस्यैः तदाविष्कर्तृभिनिर्मितं गुलरगुणविकाश-( आरोग्य प्रकाश ) नामकं पुस्तकं विहारसंस्कृतप्रथमापरीक्षायां पाठ्यत्वेन निर्धारितं विद्यते, इति परमं प्रमोदस्थानम् । तत्पुस्तकमधीत्य सर्वेऽपि संस्कृतज्ञाः सामान्यतो रोगचिकित्साचतुरा भविष्यन्तीति हन्त ! आयुर्वेदविज्ञः संसार इति कथयितुं त्वरयति चेतः ।

अस्तु पुस्तकं तत् साधुकर्गजे शोभनैरक्षरै मुद्रितं ॥) अष्टभिराणकैः ( १ ) रत्नमाला, वगहा, चम्पारन ( २ ) लोलार्ककुण्ड अस्सी, बनारस सिटी ( ३ ) मास्टर खेलाड़ीलाल, कचौड़ी गली बनारस । इति संकेतेन समुपलभ्यते ।

——:०:——

# ❁ जलप्लावनम् ❁

( ले० त्रिपाठि पण्डितनारायणपतिशर्मा ( काशी )

ब्रह्मन् ! जलप्लावनमेव भूरि,
विलोक्यते भारतवर्षखण्डे ।
ग्रामाः सहस्राधिकतोऽपि यस्मात्,
सद्यो विनष्टा बहुषु स्थलेषु ॥ १ ॥

रुद्धा अनेके जलवृद्धिहेतोः,
पुष्टाङ्कका राजपथाः प्रशस्ताः ।
ग्रष्टाश्च नष्टा बहुसेतवोऽपि,
सस्यान्नवार्ताः किमु वर्णनीयाः ॥ २ ॥

पुञ्जीकृताः सञ्चितधान्यकूटाः
जलप्रवाहे पतिता वहन्ति ( न्तः ) ।
गृहाश्च गार्हस्थ्य-समस्तवस्तु-
पश्वादियुक्ता अतिपोथिता हि ॥ ३ ॥

शिलोच्चयानां जलवेगधारया,
क्वचिच्छ्रुतं नो पतनं महीतले ।
तदेव वृष्ट्या भवतीह वत्सरे,
परं विचित्रं परमात्मनो मनः ॥ ४ ॥

आर्यावर्तप्रान्तभूमिः समग्रा,
व्याप्ता वार्भि र्वृद्धिमेताभिरेवम् ।
प्रायः पन्थानोऽपि नष्टाः प्रवाहाद्
रेलस्यान्येषां कथा का विवेच्या ॥५॥

सहस्रशो ये पशवः प्रवाहा—
दुपप्लवादुच्चखिलाश्रयाश्चेत् ।
चारा ( भक्ष्या ) द्यभावाद् गलितांगकास्ते
स्वयं मृता भर्तृविहीनकत्वात् (तायाः) ॥६॥

स्थानाभाववशादनेकमनुजास्स्वीयैः कुटुम्बैः समं,
गार्हस्थ्यान्यखिलानि भूतल-गतान्यात्मीयवस्तून्यपि ।
हित्वा क्लेशभरोग्रभीतिदलिताः कर्तव्यतामूढतां
प्राप्ता हा ! विगलद्दुकूलतनवः (शरणाः) केचिन्महोच्चस्थलम् ॥ ७ ॥

ग्रामक्षेत्रनिकेतनादिजमहामोहं परित्यज्य हा !
वासार्थं वहु (द्रुत) धूम्रयानसरणिं प्रापुः पुरः पूरगाः ।
तत्रापि स्थलहीनतामतितरामालोक्य राजाश्रयो
पोषुर्लौहमयीमनन्यगतिका गन्त्रीं रथाध्वस्थिताम् ॥ ८ ॥
यत्रासन् कृषकाः परं प्रमुदिताः शस्याप्लु (वृ) तायां क्षितौ
आसारैः परितोऽवरुध्य गमिता (विहिता) कासारतां सा द्रुतम् ।
नाव्ये संवसथे पलायनपराः पश्वादिभिःसंह (यु) ताः
लोकाः शोकभरार्तदीनमनसो जाता विपाकाद्विधेः ॥ ९ ॥
प्रायेणोत्तरभारतेऽतिमहती वृष्टि र्भवत्यञ्जसा,
या ग्रामान् सकुटुम्बभृत्यमनुजक्षेत्रान्नशस्याकुलान् ।
धाराभि र्बहुशो विधूय सलिलैर्वि (तरलाभिः) प्लावयन्ती मुहुः
वर्षेऽस्मिन् प्रलयङ्करीव सततं नामावशेषं व्यधात् ॥ १० ॥

शैलापमेताद्दृशवाढवर्षं—
विहारविध्वंसविधायकं यत् ।
तदेव वैनाशिकमत्र जातं
देशे समस्ते (ऽस्मदीये) ऽहह ! भारतेऽस्मिन् ॥११॥
विध्वंसितो वाढजलप्रवाहतो
देशाऽस्मदीयो भुवि पश्चिमोत्तरः ।
तद्वृत्तमाकस्मिक-दैवदुर्दशा—
क्लेशाभिभूतं नहि वाच्यतां गतम् ॥ १२ ॥
येनोर्वरा भूः सिकतामयी कृता
हा ! गण्डशैला वहुशो विदारिताः
नीवृत् (देशो) महापच्चिदशाञ्च यापितो,
तस्मै (वाढं) जलप्लावनकारिणे नमः ॥ १३ ॥
शिलोच्चया ये शकलीकृता भृशं,
पतन्त्यहो (न्तिवा) वाढजलप्लवाद्द्रुतम् ।
विशेषमार्गानवरुद्ध्य भूगता
स्नुगण्डशैलाः प्रथिता विभान्ति ते ॥ १४ ॥
वाढे जलप्लावनमद्भुतं यत्,
वर्षेऽभवद्धार्षिकवाढवर्षम् ।
न ताद्दृशं वृद्धतमेन लोके,
श्रुतं (वाढम्) न दृष्टं वहुवत्सरेभ्यः ॥ १५ ॥

# आयुर्वेदोपकारः ।

—:०:—

( ले०—पं० श्रीशिवदयालुमिश्रः व्याकरणाचार्य्यः काशी )

इह खलु भारते प्राचीनशिक्षायाः प्रबन्ध एवम्विध आसीत् यद् द्विजातीनां बालका वयसः त्रिंशदब्दम् यावत् गुरुकुलमेत्य ब्रह्मचर्यनियमरक्षणपुरस्सरम् भिक्षावृत्ति मनुसन्दधाना गुरूणां पूजोपस्कररागादिसमिदाहरणादिभिः शुश्रूषां विदधानाः साङ्गवेदाध्ययनम् कुर्वन्तिस्म । गुरुष्वप्येतावन्तो नामभेदा आसन् । ते हि आचार्योपाध्याय-गुरु-संज्ञया प्रसिद्धाः । ये च शिष्यानुपनयनसंस्कारादीन् विधाय साङ्गवेदानध्यापयन्तिस्म ते आचार्य्या इति ख्याताः ये च वेदस्यैकदेशमुत वा वेदाङ्गान्येव राजादिभिर्वृत्तिमुपलभ्याध्यापयन्ति स्म ते चोपाध्यायाख्यया प्रसिद्धाः । ये च विधिविहित-निषेकादीन् षोडशसंस्कारान् प्रकृत्य स्वीयान्नेन च सम्पोषयन्ति स्म ते हि गुरव इति नाम्ना संज्ञाताः । यदाह मनुः ।

उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः ।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते ॥
एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः ।
योऽध्यापयति वृत्यर्थमुपाध्याय स्स उच्यते ॥
निषेकादीनि कर्माणि यः करोति यथाविधि ।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥

एवंविधविधिविहिताचारपरिपालनपराणां तपोधनानां गुरूणामाश्रमेऽन्तेवासिनो वासं विधाय तेषां शुश्रूषया तदीयहृदयस्थितां समस्तां विद्यां समवाप्यैहिकामुष्मिकसर्वकृत्येषु कुशला दरिदृश्यन्ते स्म । येषां विरचितानि सुबहूनि ग्रन्थरत्नानि सन्ति । यानि चैहिकामुष्मिकोन्नतिसाधनानि विद्यन्त एव । तद्यथा आयुर्वेदे धन्वन्तरिगुरोरधीत्य चरक-सुश्रुत-वाग्भटादयः स्वस्व नाम्ना संहितां संविदधुः । तेष्वेकस्यैव सुश्रुतस्योत्तरभागफलस्वरूप इंग्लैण्डनिवासिभिर्डाक्टरनामधारिभिः सम्यगध्यवस्य शारीरिकव्रणापनुत्तयेम् कृन्तनशोधनयन्त्राणि प्रकाशितानि । येन प्राणिनां कियन्त उपकारा दृश्यन्ते इति न केषांचिदगोचरः ।

इह च ये केचन चिकित्सका रसायनादिक्रियाविशारदा विद्यन्ते । तेऽप्यर्थानां दौर्बल्यान्न तथा विधातुं शक्यन्ते । न केऽप्येवम्भूतो धनस्वामिनो

राजानोऽत्र, ये चायुर्वेदीयौषधीनां महर्षिनिर्मितानां निर्माणे सुविधां विधाय समस्त-जनोपकाराय यतेरन् । अतस्त्विदानीमस्मिन् क्लिष्ट-साध्यावसरे चिकित्सकै रन्यै र्वा विदुषां समूहैरितरै र्वा लोकनिपुणै र्यतस्ततः समितिं विधाय समितिद्वारेण धनसञ्चयञ्च विधायौषधीनां सम्यक् निर्माणे यदि श्रमो विधेय-स्तदावश्यं स्वल्पव्ययेनापि धनदुर्बलानां रुजार्तानां रोगनिवारणम् देशोपकारः देशीयौषधप्रचारश्च स्यात् । एवं शिल्पादिविद्यानामपि प्रयत्नस्यावश्यकता यदि देशान्तरात्प्रदीप-यन्त्रादीनि नायान्ति तदास्माकं गृहे रात्रौ तमोऽपहार एव न स्यात्, इत्यादि बहुविधवर्तमानागामिकालानां दुरवस्थां दूरीकरणाय प्रयत्नः कार्यः ।

---

# वर्तमान-संस्कृतशिक्षा ।

( ले०—पं० श्रीसुरेशकुमारः "साहित्यधुरीणः" प्रधानाध्यापकः
राघवेन्द्र संस्कृतटोल नौगछिया )

अहह दैव ! किमिदं ते चेष्टितम्, प्रायो भुवने या काचित् संस्था यया कयाचित् धारणया आदौ संस्थापिता, सा अद्यत्वे ततो विपरीतमेव मार्गमारूढा उन्नतिस्थाने अवनतिं विदधती जगत्खेदयति । विषयेऽत्र किमन्यद्दर्शयेयम् सर्वतः पूर्वं शिक्षापद्धतिरेवाश्रयणीयाऽस्ति । यतो जगति सर्वमेव ऐहलौकिकं पारलौकिकञ्च सिद्ध्यति । सा इयं संस्कृतशिक्षा काले कलिकालकवलित-कलेवरा आंगलशिक्षाभिभूता बही राजमन्दिरम् रोरुध्यमाना सुरगुरुसदृशां विदुषाम् अदम्येन श्रमेण पुनरपि संस्कृतिसमितिस्थापनेन राजमन्दिरमुपेतेयम् भूयोऽपि निजात्मानं कथंकथमपि पालितं यावद्वागच्छत् तावदेव क्रूरस्य संस्कृतारातेः कलिकालस्य क्रूरेण प्रबन्धेन केषाञ्चित् विद्वच्छलावतीर्णासुरमूर्त्तीनाम् विदुषां मनसि इयं जागृतिरुदपद्यत, यद्यथा कथंचित् परीक्षायाम् छात्रा उत्तारयितव्या इति । एतदर्थं न धर्मो ध्यातव्यो न सत्यं मनागपि प्रेक्षणीयम्, एवं कृतनिश्चयास्ते ग्रन्थतस्तान् विषयान् विविच्य विलिख्य च शुकवच्छात्रान् अभ्यासयितुम् प्रायुञ्जत ये विषयाः प्रायः प्रश्ने समागन्तुमर्हन्ति । हा ! तस्येदम् फलं प्रसूतम् । येनेदानीं कृताचार्या अपि ग्रन्थाध्यापनेऽसमर्था इतस्ततो विद्वल्लेखमासाद्य तमेव कण्ठीकर्तुम् छात्रान् व्याहरन्ति, किं कुर्वन्तु नाम एते वराकाः कलिकाललुप्तप्रारब्धा बालाः । एते पश्यन्ति यत् इदानीं किञ्चिन् ममोपाध्याया माम् वदन्ति तन्मच्छ्रेयस एव, उचितमेवैषामिदंम् विचारणम्,

परम् किमस्माभिरपि तथैव कर्त्तव्यम् । हा ! कीदृशीयम् फलविपरीता परीक्षा यत्र परीक्षकाणां छात्रास्तु प्रश्नव्यतिरिक्ते ग्रंथे ध्यानमपि न ददति । अस्तु, इदानीम् अध्यापकानाम् दुर्नीतिजातम्, इतोऽप्यधिकं निभालनीयमस्ति प्रश्ननिरीक्षकाणाम् अनवधानत्वम् । प्रायो विरल एव वर्षे विरलम्पत्रं यत्र निरीक्षकाणामनवधानता न तिष्ठति । तथा हि—तावत् प्रथमपरीक्षायामेव विचिनोमि, वर्त्तमानविषये हिन्दीगद्यानुवादविषये "अथवा" पदं विलिख्य कीदृशी तेषामनवधानता, व्याकरणपत्रे प्रणीणाम् इति लेखनीये प्राणाम् इति लेखः किमिव तेषाम् प्रमादं द्योतयति कुठाराघातोऽयं प्रथमपरीक्षार्थिनामुपरि । एवमेव मध्यमायाम्, तत्तदाचार्यखण्डे च प्रश्नदातॄणाम् निरीक्षकाणाञ्च ग्रन्थवहिर्भूतविषयप्रश्नेन दृष्टिपथमारोहति तस्मात् परीक्षकाणां निरीक्षकाणाञ्च सावधानता नितरामपेक्षणीया । कण्पिकानिरीक्षणं विद्वद्भिरिदम् अवश्यं चिन्तनीयम् यदिमम् लेखम् छेखकोऽभ्यस्य लिखितवानस्ति, ग्रन्थं निविद्य वा, यस्य ज्ञानं कण्पिकानिरीक्षणेन न दुरुहं भवति, यश्छात्रो ग्रन्थमधीत्य लिखति तत्र सत्यामपि त्रुटौ निरीक्षकाणां दया उचितस्थले अपेक्षिता, यश्चाभ्यस्य लेखं लिखति तस्मै मन्मतेन सौकर्य्यप्रदानमनुचितमेव । यतोऽयमुत्तीर्णो इमामेव परिपाटीम्प्रचालयेत् । परिपाट्यानया शास्त्रस्य मूलोच्छेदः सम्भवति । यत्र कारणतां निरीक्षका एव अधिगच्छन्ति। इति निजमूलोच्छेदनेन न कस्यापि पाण्डित्यं परिगणितं भवति । तस्मात् तत्तच्छास्त्रमर्यादारक्षणव्रतै र्विद्वद्भि र्वर्तमानपरीक्षया वृद्धिं गच्छन्ती शास्त्रलोपपरिपाटी नूनं निवारणीयेति अलम् महताम् आक्षेपप्रसंगेण ।



श्रीमंत सरकार जीवाजीराव महाराज शिन्दे आलीजाह बहादुर,

## शुभाशीरभिनन्दनम् ।

सिद्धव्रात-समेत-देवगुरुयुग्-ग्वाल्हेरभूवासव !
पुत्रप्रायनिजप्रजाव्रजसुखस्वाच्छन्द्यचिन्तोद्भवः ।
प्रोद्यद्विद्य ! तवाद्य वैद्य-विदुषां शस्तप्रशस्त्युद्भवः
सद्यः स्यादनवद्य-हृद्य-यशसो राज्याधिकारोत्सवः ॥ १
हस्तन्यस्तसमस्तवस्तु-विधिवच्छस्तं प्रशास्ति स्वयं
विद्वांस्तत्र भवान् भवान् भवभवानादाय मोदान् मुदा ।

सानन्दं च जनैर्मिथः पृथगमन्दानन्दसन्दायके
माङ्गल्यं जयगानमत्र सुतरामुच्चैः समुच्चार्यते ॥ २

श्रीमन्माधवसेवनाद्धवलसत्कीर्तिः स्वयं माधवः
श्रीमन्माधवभूधवस्तव पिता श्रीमानिवोमाधवः ।
सन्मार्गैर्वसुधा-सुधानिधिसुधीः प्राशासदाशा दश
तस्मादप्यतिरीतिनीतिनिरतो भूयाः प्रजाशावशः ॥ ३

धन्या पुण्यगणान्विता नृपसुता लावण्यवन्याप्लुता
राज्ञी प्राज्ञतमा रमाऽमररमारामा समाराधिता ।
लक्ष्मीवद् गजराऽजरापि जननी राज्येक्षणं कुर्वती
नैवालक्षि विलक्षिताऽत्र महिलालक्षेऽपि तादृक् सती ॥ ४

स्वार्थप्रार्थकसार्थ-पार्थरिपुवत् ! प्रत्यर्थि-पार्थोऽर्थतो
राज्यप्राप्तिमहोत्सवोत्सवितोत्साह-प्रवाह-स्पृशः—
कस्याप्ययं ! मही-महीयसि नहि प्रश्रेयसि प्रेयसि
प्रेम प्रेमखनौ भवेन्नृपमणौ त्वय्याशुतोषे त्वरा ॥ ५

किं ते नास्ति ? तथापि भूप ! भवते क्षुद्रोऽप्ययोग्योऽप्ययं
स्वस्तिप्रीत्यनुरागमानमिलितो हर्षोपहारः पुरः ।
दत्तः पूतहृदा प्रवर्द्धितमुदा ग्राह्योऽनुगृह्य त्वया
क्षुद्रे वा महति ध्रुवं हि महतां प्रीति-प्रतीतिः समा ॥ ६

स्मृतिशास्त्राचार्य—श्रीसतीन्द्रचन्द्र भट्टाचार्य—तर्कव्याकरणतीर्थ न्यायाचार्यस्य
( विद्यालंकार—साहित्यशास्त्रि—धर्मशास्त्रभास्करस्य )
( अध्यापक—राजकीय संस्कृतमहाविद्यालय, लश्कर—गवालियर )

---

# प्राचीन नवीन विद्यार्थिजीवनम् ।

ले०—दिनपतिपाण्डेयः काव्यतीर्थः व्याकरणशास्त्री
श्री अन्नपूर्णा 'मिल्स' संस्कृतविद्यालय नगवा ( काशी ) ।

अत्र प्रथमं कालो विभज्यते सच चतुर्विधः, तपःकाल, ज्ञानकालः, यागकालः, दानकालश्चेति । ततश्च प्राचीनत्व-नवीनत्वे, अपि सापेक्षे । सर्वथा दानकालादस्मात् त्रयाणामपि प्राचीनत्वमिति सर्वसम्मतम् । तत्र तपःकाले इन्द्रादयो विद्यार्थिनः प्रजापत्यादयो गुरुमुख्याः, तपो गुरुशुश्रूषा, उपनिषदो विद्याः,

प्रयोजनम् ब्रह्मज्ञानम् । तपःकालश्च वर्षजातम्, वर्षसहस्रंवा, भिक्षा आजीविका, तरुलताद्या भिक्षादातारः, मधु-घृत-दधि-क्षीरप्रभृति भिक्षान्नम् । भूर्जपत्रादि शरीराच्छादनम् । मौखिकोपदेशः, चित्तभित्ति पत्रम् इत्यादिसंक्षेपः । अयं सृष्टि-कालः । अयमेव सत्ययुग इतिप्रसिद्धिः । अस्मात्कालात्किञ्चिदेव परिणतः कालो ज्ञानकालस्त्रेता इति व्यपदिश्यते । विस्तरभयान्न स विवृतः ।

अथ यागकाले यादृशं विद्यार्थिजीवनमासीत् तस्यैव कियती अनुवृत्ति-रासीत् पूर्वशताब्दीपर्यन्तम् । अधुना तु कुत्रचिदनुकरणं कारयन्ति विद्यावणिजः । हन्त ! स्वाभाविको धर्मः कालमहिम्ना कथं जातः ।

तदानीं खलु पञ्चमवर्षे कुम्भार्कवर्जे माघादिमासषट्के चन्द्रतारानुकूले शुभमुहूर्ते गणेश-विष्णु-सरस्वती-पद्मालयादीन्संपूज्याक्षरस्वीकारं कृत्वा, विधि-पूर्वकं लिपिग्रहणानन्तरमेव कोष-काव्य-ज्ञानं सामान्यतः कारयित्वाऽष्टमे वर्षे विधिवदुपनीतस्य बालकस्य शौचाचारादिग्रहणानन्तरं वेदारम्भमकार्षुः । वेदारम्भे च गृहीत-ब्रह्मचर्य-चिह्नस्य हस्ते भिक्षापात्रं वंशनिर्मितं स्वयं-दत्वा तत्र च प्रथमं माता स्वयं षण्मुष्टिं भिक्षां दत्वा, गच्छ तनूज ! पठनाय पाठ-शालाभूतं गुरुगृहमिति, काशीमिति वा प्रेषयतिस्म, पिता चानुमनुतेस्म । तदनन्तरं स्वस्रादयः सर्वा सुवासिन्यः स्वस्वहस्तैः, भिक्षां दत्वा तं विद्याध्ययनाय विसर्जयन्ति स्म । वदन्तिस्म च, अयि आयुष्मन् ! एवमेव तत्रापि ते मातरो वर्त्तन्ते तासां द्वारि गत्वा भवति ! भिक्षां देहि मातरिति गदितव्यमायुष्मता भवता इति ।

ततश्चोपदिष्टो मात्रादिभिः स वटुः प्रसन्नोऽनधिगतनिजपरभावो भुवन-मपि कुटुम्बं मन्यमानः, गुरुमेव परमहितं मन्वानस्तमनुसरन् भिक्षान्नेन वर्त्तयन् "भैक्ष्येण वर्त्तयेन्नित्यं नैकान्नादी भवेद्व्रती" इति परमनियमं जगद्धिताय स्वहिताय च पालयन् स्वाध्यायं पारयामास, महर्षितुल्यश्च बभूव । इतिसंक्षेपः ।

अधुना तु बाल्येऽनधिगतलिपिरथवा दुर्गृहीताक्षरो दुर्विदग्धो— निरक्षराचार्यो वा, अनूढकन्य ऊढकुपितृदत्तकन्यो वा पित्रानुमतः पलायितो वा द्विजातिकुमारः, द्विजातिब्रुवबालको वा काश्यामन्यत्र वा पाठशालिकासु, पाठशालासु वा, ज्ञातसदाचारः, अज्ञाताचारो वा गुरुमनुसरन् विपरीतो वा, विद्यार्थीत्युच्यते । अहोकालमहिमा ! अथवा राजा कालस्य कारणम् । तथाच गुमानीकविः । "न वेदविहितश्रमं स्मृतिविदं न तन्त्रोद्धुरम्, न शास्त्रविहितश्रमं न समधीतसाहित्यकम् ॥ लिखन् पठति यावनीमपि च आङ्गरेजीं लिपिम् । तमेव बत मन्यते बुधजनं फिरङ्गीजनः । इतिशम् ।

——:०:——

# आवश्यकीयान्दोलनम् ।

ले० श्रवणकुमारपाण्डेयो व्याकरणशास्त्री
हाजीपुरीय-रत्नाकर-संस्कृत-विद्यालयान्तेवासी ।

भो भो अस्मदार्यकुलतिलकालङ्कुरा द्विजालङ्कारा विहार-संस्कृत-समिति-सदस्याः ! विदितमेवास्ति, यदत्र तत्र भवतां विहारप्रदेशारण्यपरायणान्तेवासिगणजेगीयमानेन यशसा भूषितानां भवतां समक्षे विहारे दैनन्दिनं विवर्धमानविद्याध्ययनाध्यापनशैलीं निरीक्ष्यापि विद्यार्थिजीविकायै किंचिदपि विहार संस्कृत-समित्या साहाय्यम् न भवति । वाराणस्यादिप्रदेशेषु छात्रवृत्तिः ( स्कालर सीप ) सर्वप्रथमाय छात्राय समर्पिता भवतीत्यत्र पण्डितप्रकाण्ड-सदस्यगणनिर्गतवाचः प्राबल्यमेव कारणम् । अग्निरूपवन्तो भवन्तः महाराजादीनां प्रत्यक्षं संस्कृतसमितिमुपागत्यान्योऽन्यवागाडम्बरेण स्फालनेन च आस्माकीनो विहार इदानीं विद्याध्ययनाध्यापनमहोन्नतिं प्राप्नुवन् कथं वृत्तिमवाप्नुवन् तिष्ठतीति विषयमुपस्थाप्य न यतन्ते ।

न जाने चन्द्रकान्तमणिसमवधानेनाग्नेर्दाहशक्ति रिव समित्युपस्थाने-नैवावश्यकेऽपि विषये भावत्कवाक्छक्ति र्बिडौजः पुरातिथित्वमाश्रयति । केचन विद्वांसस्तु समितिमच्छगत्यैव वयं धन्या इतिमन्यमानास्तिष्ठन्ति । हन्त ! समितिरेषा विद्यार्थिजीविकार्थमपि स्थापिता, परन्तु नहि-विद्यार्थि-जीविकोपकारिका युक्तिः काचित्तयाऽऽविष्कृता भवति । अहो ! वृत्युच्छेदो हि तद्वधः ! इति लोकोक्तिमनुस्मरन्नपि छात्रवृत्तिरावश्यकीति भवन्मनसि आवृतभावो न प्रकाशते । अन्यप्रदेशीयसंस्कृतसमित्या अन्यप्रदेशस्य कृते साहाय्यं भवतीति तत्रैकमत्यमेव कारणम् ।

भवन्तोऽप्यैकमत्यमास्थाय संस्कृतसमितिमुपस्थाय वाचा युध्येरंश्चे दैषम एव छात्रवृत्तिः सम्राजा ( विहारसरकार ) समर्पिता भवेत् । अत एवोक्तम्, सकलशास्त्रविशारद-नीतिकुशल-विष्णुशर्मभिः 'संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपीति । निर्वृतिकतोपतप्तमानसस्य मे वचनमरोचकमपि प्राकृतिककरुणाशालिभिः सोढव्यमेवेति संभाव्य विश्राम्यति ।

—:o:—

# वेदपुराणयोरैकवाक्यता ।

( अवैदिकतानिरासः )

( २ )

निबन्धा-श्रीदीनानाथशर्म्मा शास्त्री सारस्वतः ।

( 'मुलतान' स्थ-स० ध० कालेजाऽध्यापकः )

'गणानां त्वा गणपतिं हवामहे, कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ।'

—ऋ० २ २३।१ ।

'सविता पश्चातात् सविता पुरस्तात् सवितोत्तरात्तात् सविताऽधरात्तात् । सविता नः सुवतु सर्व्वतातिं सवितानो रासतां दीर्घमायुः '

—ऋ० १०।३६।१४ ।

'पुनन्तु मां देवजनाः पुनन्तु वसवो धिया ।

विश्वेदेवाः ! पुनीत मा, जातवेदः ! पुनीहि मा, ऋ० ९।६७।२७

'यो अस्मभ्यमरातीयाद् यश्च नो द्वेषते जनः ।

निन्दाद् योऽस्मान् धिप्साच्च सर्व्वं तं भस्मसा कुरु' यजुः ११।८० ।

## अथ अवैदिकतानिरासः ।

यत्र स्कम्भः प्रजनयन् पुराणं व्यवर्त्तयत्' अथर्व्व० १०।७।२६

'ऋचः सामानि छन्दांसि पुराणं यजुषा सह ।

उच्छिष्टाज्जज्ञिरे सर्व्वे दिवि देवा दिविश्रितः, अथ० ११।७।२४ ।

अथ पूर्व्वप्रतिज्ञानुसारं पौराणिककतिपय-( १०० ) विषयेषु वेदमन्त्राणां साद्यं प्रदर्श्यते । यतोऽदृष्टविषयेषु आप्तोपदेशस्यैवाऽप्रतिहतता भवति, तर्कस्त्वप्रतिष्ठः; यतस्तर्क्कं तर्कान्तराणि विनिपातयन्ति । अत एवोक्तं वाक्यप्रदीपे—

'नचागमाद् ऋते धर्म्मस्तर्केण व्यवतिष्ठते । ऋषीणामपि यज्ज्ञानं तदप्यागमहेतुकम्' इति । तर्कस्य निस्सारतायामुदाहरणं यथा—स्वा० दयानन्देन 'सत्यार्थप्रकाश' स्य दशमसमुल्लासे एक–प्रश्न–कृतः । ( प्रश्न ) जो गायके गोबरसे चौका लगाते हो, तो अपने ( मनुष्यके ) गोबरसे चौका क्यों नहीं लगाते ? अस्य प्रश्नस्योत्तरं स्वा० दयानन्देन तर्कमवलम्ब्येत्थं दत्तम् ( उत्तर ) गायके गोबरसे वैसा दुर्गन्ध नहीं होता, जैसा कि मनुष्यके मलसे, । इमं तर्क्कमन्यस्तार्किक इत्थं प्रत्याचष्टे, स्वामिमहोदय ! यदि दुर्गन्धस्य हेतोर्भवतानार्य्यसमा-

जमन्दिरेषु मनुष्यमललेपनं निषेधति; तर्हि न भयम्, तेषु मनुष्यमललेपनमेव कार्य्यम्, शिष्टा वार्त्ताऽस्ति तद्-दुर्गन्धस्य, तस्याऽपि न भयम्, यतो भवता हवनस्य फलं दुर्गन्धनिवारणं प्रोक्तमेव, तत् तत्र हवनकरणेन दुर्गन्धो व्यपगतो भवेत् ॥ एवं तस्मिन्नेव समुल्लासे स्वामिमहोदयस्याऽभ्यस्तर्को दृश्यते—'जो अति उष्णदेश हो, तो सब शिखासहित छेदन करा देना चाहिये, क्योंकि शिरमें बाल रहनेसे उष्णता अधिक होती है, । इमं तर्कमन्यस्तार्किक इत्थं निराकरोति— एवन्तु भवदनुयायिस्त्रीणां वाला अपि उष्णरश्मि-रश्मिजालोष्णोष्मणि वपनव्याः स्युः ॥ अग्रे स्वा० द० महाशयः श्मश्रुकूर्च्चमुण्डनायेत्थं तर्कमुपस्थापयति— 'डाढी मूछ रखनेसे भोजन पान अच्छे प्रकार नहीं होता और उच्छिष्ट भी बालों में रह जाता है, इमं तर्कमितरस्तार्किक एवमपाकरोति—यद्युच्छिष्टस्थिति-कारणादेव स्वामी श्मश्रुकूर्च्चमुण्डनमादिशति; तर्हि तु तस्मादेव कारणाद् दन्ता अपि मुखाद् विनिर्गमयितव्याः स्युर्यतस्तेष्वप्युच्छिष्टं तिष्ठति ॥ एवं स्वा० दयानन्दः 'संस्कारविधौ' विवाहप्रकरणे 'सत्यार्थप्रकाशे च भ्रातृभगिन्योर्विवाह-निषेधे इमा युक्तीराचष्टे, यद्-बाल्यावस्थायामुभावितरेतरं नग्नं पश्यतः, इतरे-तरयोर्गुणदोषाश्च विदिता भवन्ति, एकगोत्रे च विवहनादुन्नतिर्न भवति'-इमा युक्तीरितर इत्थं निराकरोति, यद्येतत्कारणादेव स्वामी भ्रातृभगिन्योर्विवाहं विरुणद्धि, तर्हि य आर्य्यसामाजिको बालो गुरुकुले पठनाऽर्थं गतो भवेत् पञ्चविंशतिवर्षकृते, तत्परोक्ष एव च तद्भगिनी गृहे उत्पन्ना प्रवृद्धा च भवेत्, तया सह तु तदा तेन स्नातकेन विवाहः कर्त्तव्य एव; यतो नाऽसावमूं नग्नामप-श्यद्, न च तद्गुणदोषास्तेन विदिताः । अथ च स्वकुले विवहनेन यदि नोन्नति-स्तर्हि तथा कुर्व्वतां मोहम्मदादीनां कथमुन्नति र्दृश्यते-इत्यादि ।

एतदुल्लेखस्येदमेवाऽभिप्रेतम्, यदि आप्तवचनमेतदादिकविषयेषु नोप-स्थाप्येत, केवलं युक्त्याश्रयेण ईदृशा विषया उपोद्बल्येरन्; तर्हि प्रबलतरयुक्तयः पूर्व्वयुक्तीर्निरस्याऽस्मद्धर्म्ममेव दवयेयुः, एवञ्चाऽऽप्तवचनेऽमते प्रत्यक्षाऽनुमान-मात्रमाने सति पुत्रः स्वपितरमपि साधयितुं नाऽलं स्याद्, यतस्तेन गर्भस्थितौ निषेचको न प्रत्यक्षीकृतः, कदाचित्तत्पितृव्यतिरिक्त एव निषेचकस्तदोपस्थितः स्यात्, प्रत्यक्षाऽभावाच्चाऽनुमानमपि नाऽव्यभिचारि भवति । तेनैतदाद्यदृष्ट-विषयेषु आप्तवचनमवश्यमेव मन्तव्यम्भवति, ( तत्र चाऽऽप्ता माता भवति, याऽऽचष्टे-अयं भवत्पितेति ) । एतदुद्दिश्यैवाऽस्मिन्नवैदिकतानिरासे आप्तवचन-सङ्ग्रह एवाऽस्माकम्प्रयासः, यतोऽदृष्टवस्तुन्याप्तवचनमेव सहायकम् ।

अधुना वेदाऽर्थविषयेऽपि किञ्चिन्मीमांस्यते—

केचिद् वादिनो वैदिकपदानि केवलयौगिकानि मन्यन्ते; नरूढ़ानि, न वा योगरूढ़ानि। तदसद्—वेदे केवलयौगिकतायां मतायां 'सूर्य्याचन्द्रमसौधाता यथापूर्व्वमकल्पयत्' ऋ० १०।१९०।३ इत्यत्र परमात्मा द्वौ परमात्मानावरचद्-इत्यतिप्रसक्त्याऽऽपत्तिर्भविष्यति, यौगिकाऽर्थे सूर्य्याचन्द्रमसोरपि परमात्माऽर्थत्वात्, एवमन्यत्राऽपि परमात्माऽर्थव्यतिरिक्तं किमपि वेदे वर्णनं न मन्येत, परमनिष्टमेतद् भाष्यकाराणाम्। अथ च वेदे केवलयौगिकशब्दा मन्येरन्, न खलु योगरूढा रूढा वा; तर्ह्यर्थस्य काऽपि व्यवस्थैव न तिष्ठेत्; तदा 'सूर्य्य' शब्दस्याऽर्थश्चलन् पुरुषः पशुर्वा, अश्वस्याऽर्थो गोगर्दभादिः, गोशब्दस्याऽर्थोऽश्व गर्दभादिकश्च स्यात्, तदा तु भ्रातृशब्दस्याऽर्थो भर्त्ता, 'भर्त्ता' इत्यस्य भ्राता, पिता-इत्यस्य पतिः, पतिः-इत्यस्य पिता, भगिनी-इत्यस्यार्थः स्त्री, जाया-इत्यस्य माता इत्यर्थे जाते महानुपप्लवः स्यात, परमनिष्टमेतत्। (१) सनातनधर्म्माणस्तु वेदे न सर्व्वाञ्छब्दान् रूढान्, न च सर्व्वान् यौगिकान् मन्वते। प्रकरणादि-व्यवस्थयैव ते रूढ-यौगिक-योगरूढ-यौगिकरूढाँश्चतुर्व्विधशब्दान् वेदे मन्यन्ते। 'पावक' इत्यस्य रूढाऽर्थोऽग्निः, यथा-'तस्मै पावक मृलय' ऋ० १।१२।९ अत्राऽग्निदेवताप्रकरणत्वात् ते ( सनातनधर्म्माणः ) पावकं रूढशब्दं मन्यन्ते। 'समुद्रार्था याः शुचयः पावकास्ता आपो देवीरिह मामवन्तु' ऋ० ७।४९।२ अत्र अब्देवताप्रकरणत्वात् ते 'पावक' शब्दं जले योगरूढमन्वते। एवं 'पावका नः सरस्वती' ऋ० १।३।१० इति सरस्वतीदेवताप्रकरणे ते पावकशब्दं यौगिकमन्यन्ते। यौगिकरूढस्योदाहरणम् 'उद्भिद' पदम्, इदं यौगिकत्वे वृक्षाऽर्थं रूढत्वे च यज्ञविशेषाऽर्थं पिशुनयति। एवं 'नर' इत्यस्य रूढाऽर्थो मनुष्य इति भवति, परं 'दिवो नरः' ऋ० १।६४।४ इति मरुद्-देवतात्मक-प्रकरणे नर इत्यस्य नेतार इत्यर्थं मत्वा तं यौगिकं मन्यन्ते ते, एवं 'नृणां नृतम्!' ऋ० ६।३३।३ इतीन्द्रदेवताकेषु मन्त्रेष्वपि 'नेतॄणां मध्येऽतिशयेन नेतः!' इत्यादि सायणकृतोऽर्थो द्रष्टव्यः। 'यत्रा नरो देवयन्तः' अ० २०।१०७।१५ अत्र नरः-मनुष्या देवयन्तःदेवान् पूजयन्त इत्यर्थे ते ( सनातनधर्म्माणः ) नृशब्दं रूढं मन्वते। एवं 'मर्य्य इव योषाम्' अ० १४।२।३७ अत्र यदि मर्य्यशब्दो मनुष्ये रूढः; तर्हि 'समर्य्यः' ऋ० १।७७।३ अत्राऽग्निविशेषणत्वे स 'मारकः' इत्यर्थवान्

(१) 'सनातनधर्म्म, शब्दोऽस्मदीयधर्म्मस्य प्राचीनं नाम-इत्यश्लीलताप्रकरणे ऽस्माभिर्दर्शितम्। स्वा० दयानन्दोऽपि मेनेऽमुं शब्दम्. तथा च—'हम देहकी रक्षाके लिये सनातनधर्मको नहीं त्यागेंगे, इति स्वा० द० वचनं 'दयानन्दप्रकाशस्य 'संगठनकाण्डे' १० सर्गे ३७८ पृष्ठे ११ पङ्क्तौ। सातवलेकरादयोऽपि प्रयुञ्जत एतत्पदम्।

वर्त्तते। केवलयौगिकतायां (१) मतायां 'वैदिकनिघण्टु'-संग्रहोऽपि-यत्र एकस्य वस्तुनो रूढ़ा योगरूढा वा पर्यायाः सङ्गृहीताः—वैयर्थ्यकोटिमाटीकेत। इयं विवेचना पाठकानां लाभाय लिखिता, यत् ते वादिजनोपस्थापितयौगिकतामात्रभ्रमे न तिष्ठेयुः। अथचाऽस्माभिर्मन्त्रा अपि ईदकृ-सुगमाः सङ्गृहीता येन तदर्थं कस्याऽपि भ्रान्तिसम्भव एव न स्यात्, ।।भ्रान्ति ꣳ कठिनपदवत्सु एव मन्त्रेषु भवति, अस्माभि ꣳ प्रायस्तादृङ्-मन्त्रा उपस्थापिता अपि न। अथ च सुगमेष्वपि मन्त्रेषु अनेकोऽर्थपदानामर्थनियामकाः—

'संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्याऽन्यस्य सन्निधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्याऽनवच्छेदे विशेषस्मृतिहेतवः॥'
इति वाक्यपदीयोक्ताः संयोगादयो ऽप्युपयोज्याः।

एष्वपि प्रकरणं बलवद् भवति। प्रकरणञ्च वेदाऽनुक्रमणीकर्तृभिर्महता परिश्रमेणोपनिबद्धं 'देवता' शब्दद्वारा। एतेनाऽविस्पष्टं सिद्ध्यति, यत् सर्व्वाणि प्रकरणानि न परमात्माऽर्थपराणि। यदि सर्व्वाणि प्रकरणानि परमात्मपराण्येव स्युर्न भिन्नभिन्नदेवपराणि, तर्हि अनुक्रमणीकर्तॄणां परिश्रमो वैयर्थ्यं कलयेत्, सर्व्वेषां प्रकरणानां परमात्मैव देवता-इति लाघवेनाऽऽदौ सूचनीयमर्थमुपेक्ष्य तैर्भिन्नभिन्नदेवतोपन्यासपरिश्रम ꣳ कथं निर्व्यूढः? 'अर्के चेन्मधु विन्देत किमर्थं पर्व्वतं व्रजेत्?', तेनैतत् सिद्ध्यति—मन्त्राणामर्थास्तत्तन्निर्दिष्ट-देवताऽनुसारमेव भवन्ति न तु स्वातन्त्र्येण। अन्यथा वेदाऽर्थव्यवस्थैव भज्येत। इत्येतावदेवोक्त्वाऽधुना प्रकृतमनुसरामः। पाठका धैर्य्यपूर्व्वकं निम्नस्थ-पौराणिकविषयाणां वेदोपस्थापितमन्त्रेषु सत्तां पश्यन्तो वादिनां कण्ठकुण्ठनाय सततं सज्जाः स्युरिति निवेद्योपक्रम्यन्ते प्रागुक्तविषयाः, यान् वादिनोऽनैदिकानाचक्षते सततम्।

---

(१) अथच केवलयौगिकतायां सहस्रं व्याख्यातारः सहस्रविधाऽर्थान् कुर्य्युः; तदर्थस्य काचिद् व्यवस्थैव न तिष्ठेत्, तदा गोक्षीर (अ० २।२६।४), सूर्य (यावत्सूर्यो विपश्यति, अ० १०।१०।३४), पृथिवी (अ० १२।१।१), पिप्पली (अ० ६।१०६।१ पृश्निपर्णी (अ० २।२५।१), स्त्री (ऋ० ४।६१।६), क्रिमि (अ० ५।२३।३), इत्यादीनां रूढा योगरूढा वा अर्थाः कथमपि न ग्रहीतुं शक्येरन्। परं वादिनोऽप्येषां रूढार्थानेव कुर्व्वन्ति वेदे, तेन तेऽन्यत्र यद् यौगिकतामात्रमुपदिशन्ति; तत्र पौराणिकाऽर्थो माभूदित्येवं तेषां भवति प्रयत्नः।

## ❀ १ भूमिका ❀

इयं पठितैव श्रीमद्भिरश्लीलतानिरासे 'सूर्योदय' गतसंख्यासु ।

### ❀ २ वेदेष्वप्यश्लीलता पुराणादिवत् ❀

'पिता यत् स्वां दुहितरमधिष्कन् क्ष्मया रेतः सञ्जग्मानो निषिञ्चत' ऋ० १०।६१।७। 'महानग्नी महानग्नं धावन्तमनुधावति । इमास्तदस्य गा रक्ष यभ मामध्यौदनं' अ० २०।१३६।११। यथा 'योनौ रेतः दध्यात्' एवमेवैतदृत्विजो यजमानं लोके दधति' शतपथे २।२।२।७ साध्वीयमुपमा । 'तत्पत्नीष्वेवैतद् योनौ रेतः सिक्तं प्रतिष्ठापयति' शत० १।६।२।११। 'अयं न विद्म यो मृगः शीर्ष्णा हरती धाणिकाम्' अ० २०।१३६।१० धाणिकाम् भगम् । 'मा दुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः' ऋ० ६।५५।५। ,शिश्नेनाऽऽत्मन आर्त्तिमारिष्यसि, क्लीबो भविष्यसि' शत० १।४।५।१६। स्वा० दयानन्दः संस्कारविधेः १४६ पृष्ठे 'ब्रह्म' सबसे बड़ा परमात्मा......इस मेरी स्त्रीको प्रजासे बढ़ाया करते हैं' इति टीकायां परस्य स्त्रियां परमात्मद्वारा प्रजामुत्पादयति किमेतेन परमात्मा पापी भवति नो वा ? यदि नहि, तर्हि पुराणे परमात्मा कथं पापी अन्यस्त्रीषु प्रजामुत्पादयन् ? । 'प्रतिलामीति ते पिता गभे मुष्टिमतंसयत्' यजुः २३।२४ तव पिता गभे—भगे ( आद्यन्तविपर्ययं आर्षः ) मुष्टि-मुष्ट्याकारं शिश्नम् अतंसयत्–अक्षिपत् । ( अदयौ वृषण्यन्त्याः केशा मां ते कामेन शुष्यन्तु ) अथ० ६ ६।१। 'स्वसारं जारो अभ्येति पश्चात्' साम० उत्त० १५।२।१।३। 'शमीमश्वत्थ अरूढस्तत्र पुंसवनं कृतम्' अथ० ६।११।१। अत्र पुंसः स्त्रिया उपरि आरोहणं पिशुनितम् । 'यथा योनौ रेतः सिञ्चेत्' श० १।७.२ १४।

'यावदङ्गीनं पारस्वतं हास्तिनं गार्दभञ्च यत् यावदश्वस्य वाजिनस्तावत्ते वर्द्धतां पसः' अथ० ६।७२.३। अत्र पसः–शिश्नम् अश्वहास्तिगर्द्दभशिश्नपरिमाणद्राघिमवत् प्रदर्शितम्; हंहो ! दैर्घ्यस्य परा काष्ठा ! । 'पुंसि वै रेतो भवति, तत् स्त्रियामनुषिच्यते, अथ० ६।११।२। 'यथा शेपो अपायातै स्त्रीषु चाऽसदनावयाः । अवस्थस्य क्नदीवतः शाङ्कुरस्य नितोदिनः । यदाततमव तत्तनु यदुत्ततं नि तत्तनु' अ० ७।६५।( ६० )।४। अस्याऽर्थः सायणभाष्ये द्रष्टव्यः । 'एवा ते शेपः सहसाऽयमर्कोऽङ्गेनाऽङ्गं संसमकं कृणोतु' अ० ६।७२।१। तेत्वदीयं शेपः पुंव्यञ्जनलक्षणमङ्गम् ( शिश्नम् ) अङ्गेन-स्त्रिया योनिदेशेन संसमकं समागमनम् उपभोगक्षमं करोत्वित्यर्थं इति सायणः । 'सुयभ्या कन्या कल्याणी' अ० २०।१२८।६। यभँ मैथुने ( भ्वा० प० सक० अनिट् ) । 'उत्तानेव वै योनिगर्भं बिभर्त्ति' शत० ३।२।१।२६। 'शेपो गर्भस्य रेतोधाः' अथ० ५।२५।१। ।

'योनीरुलूखलम्, उत्तरोखा भवत्यधरमुलूखलम्, ......शिश्न मुसलं तद् वृत्तमिव भवति, वृत्तमिव हि शिश्नम्......दक्षिणतो वै वृषा योषामुपशेते शत० ७।५।१।३८। अत्र 'उपमा कालिदासस्या' ऽप्यधरीकृता । 'अपि नह्यास्यस्य मेढ्रं य इत् स्त्री पुमान जभार' अ० ७।१०० (६५)।३। 'यस्त ऊरू विहरत्यन्तरा दम्पती शये । योनिं यो अन्तरारेह्रि' अ० २०।९६।१४। 'यस्त्वा भ्राता पतिर्भूत्वा जारो भूत्वा निपद्यते' अ० २०।९६।१५। 'यदा स्थूलेन पससाऽणौ मुष्का उपावधीत्' अ० २०।१३६।२। 'महानग्न्युपब्रूते अश्वस्याऽऽवेशितं पसः' अ० २०।१३६।६ अथर्ववेदे १३६ सूक्तमश्लीलम् । एतदतिरिक्ता अश्लीलमन्त्रा यदि दिदृक्षणीयाः स्युस्तर्हि 'अश्लीलतानिरास' नामकैतल्लेखप्रथमभागे 'भूमिकायां' द्रष्टव्याः ॥

---

# सूर्य्योदयाभिनन्दनम् ।

ले०—गुणेश्वरशर्म्मा, वाराणसीस्थ श्रीचन्द्रमहाविद्यालयीयः ।

मासे ध्वान्तमपास्य हन्त विविधं वृत्तान्तमाश्रावयन्
निद्रामग्नजनाननुत्तमयं क्षिप्रं प्रबोध्याखिलान्
धीरान् संसुखयन् भृशन्त्वतितरैश्शुभ्रैर्यशोभिश्चिरात्
सर्वाशाः खलु द्योतयन्नतितरां वर्वर्त्ति 'सूर्य्योदयः' ॥ १ ॥

यत्'सूर्य्योदय'नाममङ्गलमयस्यारम्भतो दर्शने
नानाशास्त्रविमर्शकृद्बुधजनो वृन्दारकाणां गिरम्
रम्यां सत्सरलां विविच्य महतीं सद्भावपूर्णां मुदा
ध्यायन् श्रीसुरभारतीमनुपलं मोदार्णवे मज्जति ॥ २ ॥

शिष्यः संस्कृतभारती विरहितः संवीक्ष्य यं सत्वरम्
भूयःसन्ततमद्भुतां सुरगिरं सोत्कण्ठमालम्बते
अल्पज्ञोऽपि चिरं विलोक्य हृदयैः श्लाघ्योऽयमेवं जनैः ।
सोऽयं मासि समुद्भवत्यतितरां वन्द्यो हि 'सूर्य्योदयः' ॥ ३ ॥

अन्तेवासिवरो भवेन्न हि भवे को नाम नाम प्रियः
को वा साधुजनो जनप्रिय इति ख्यातो न सूर्य्योदये
प्राज्ञः प्राप्तसमादरो न वृणुते को नाम तत्पत्रिकाम्
सन्तो हन्त गुणैश्चिरादुपगतः सर्वत्र 'सूर्य्योदयः' ॥ ४ ॥

सूर्य्योदयाद्वरा नास्ति भूमौ काचन पत्रिका
संस्कृताध्यायिभिर्नूनं ग्राह्याऽतः सर्वदा मुदा ॥ ५ ॥

---

# दार्शनिक ईश्वरवादः ।

[ ले०—पं० छज्जूरामशास्त्री विद्यासागरः, कुरुक्षेत्रप्रान्तीयः । ]

न्यायदर्शने—प्रमाणप्रमेयादिषोडशपदार्थतत्त्वज्ञानान्मुक्तिर्मता ।

अर्थात्—एषां पदार्थानां तत्त्वतो ज्ञानेन दुःखस्यात्यन्तिकी निवृत्तिरपवर्गः । अत्र यद्यप्येव स्यईश्वरेण साकं कोऽपि साक्षात्सम्बन्धो नास्ति तथापि कर्मफलेन सहेश्वरस्य निमित्तकारणतासम्बन्धो मन्यत एव । तथा चानुमानतोऽपि सृष्ट्या सहेश्वरस्य सम्पर्को ज्ञायते । तद्यथा—"ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्" इत्यादिषु त्रिषु न्यायसूत्रेषु ईश्वरवादस्य स्पष्ट वर्णनमुपलभ्यते । पूर्वसूत्रस्य भाष्यकारो वात्स्यायनो वदति—"पराधीनं पुरुषस्य कर्मफलाराधनमिति यदधीनं स ईश्वरः" तस्मादीश्वरः कारणम् । एवं कुसुमाञ्जलि-न्यायमंजरी-तत्त्वचिन्तामणि-दीधिति-प्रभृतिषु प्राचीननवीनन्यायग्रन्थेषु-चार्वाकबौद्धजैनसांख्यमीमांसकाभिमतस्य निरीश्वरवादस्य खण्डनं कृत्वा ईश्वरवादः स्थापितः । एषु ग्रन्थेषु कुसुमाञ्जलिरुदयनाचार्यस्य, ईश्वरानुमानचिन्तामणिर्गङ्गेशोपाध्यायस्य, ईश्वरविषयकसर्वश्रेष्ठग्रन्थौ । भाष्यकारेण ईश्वरस्यस्वरूपसम्बन्धे इदमुक्तम्—"अधर्ममिथ्याज्ञानप्रमादहान्या धर्मज्ञानसमाधिससम्पदा च विशिष्टमात्मान्तरमीश्वरः" । यथा पिता अपत्यानाम्, तथा पितृभूतईश्वरो भूतानाम् । न्यायसिद्धान्ते—ईश्वरो निराकारः सर्वज्ञः सर्वव्यापकः, नित्यैश्वर्यसम्पन्नः स च यज्ञादिकर्मणा योगेन भक्त्या ज्ञानेन चोपास्यः-तस्यैव द्वितीयं नाम परमात्मेति । तस्योपासनैव न्यायचर्चा मननात्मिका—यदुक्तम्—"न्यायचर्चेयमीशस्य मननव्यपदेशभाक् । उपासनैव क्रियते श्रवणानन्तरागता ॥ स्वर्गापवर्गयोर्द्वारमामनन्ति मनीषिणः । यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥ वैशेषिकदर्शनं हि न्यायस्य समानतन्त्रम् । तत्रापि न्यायदर्शनवत्, अनुमानप्रामाण्येन जगदुत्पत्त्यर्थमीश्वरस्य निमित्तकारणता स्वीकृता भगवता कणादेन । तत्त्वज्ञानमेव मोक्षकारणमस्मिन्प्रसंगे प्रशस्तपादभाष्यकारेणोक्तम् । तच्च तत्त्वज्ञानमीश्वरनोदनाभिव्यक्ताद् धर्मादेव, न्यायवैशेषिकयोर्द्वयोरपि दर्शनयोर्मते—

"सृष्टिसंहारकृत्-शिव एव ईश्वरो मतः ॥ सांख्यदर्शने प्रकृतेः प्रधानतयामुक्त्या सहेश्वरस्य यद्यपि साक्षात्सम्बन्धो नास्ति, तथाप्यनादिविवेकेन प्रकृत्या सहेश्वरस्य औपचारिकसम्बन्धो वर्तते । अत्र लौकिकविचारेण ईश्वरसत्ता न मन्यते । तथापि मुक्तात्मपुरुषगण ईश्वरस्तुतिं कृतवानिति-ईश्वरास्तित्वे न

सन्देहः । अर्थात् सांख्यदर्शनकृत्—अलौकिकप्रत्यक्षद्वारा ईश्वरस्यास्तित्वं स्वीकृतवान्, तथा च तत्सूत्राणि—"योगिनामवाह्यप्रत्यक्षत्वान्न दोषः" "तत्सन्निधानादधिष्ठातृत्वं मणिवत्" "अनेनैव जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्" इति ॥ योगदर्शने—मुक्तिप्राप्तिसाधनरूपेण ईश्वरसत्ताया महद्वर्णनं कृतम् । तद्यथा—"ईश्वरप्रणिधानाद्वा" क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" "तत्र निरतिशयं सार्वज्ञबीजं" "स पूर्वेषामपि गुरुः" कालेनानवच्छेदात् "तस्य वाचकः प्रणवः" "तज्जपस्तदर्थभावनम्" "समाधिसिद्धिरीश्वरप्रणिधानात्" भाष्यकारो व्यासश्चाह—"प्रणिधानात्भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णाति" एवमुभयोरनयोर्दर्शनयोरीश्वरवादित्वं सिद्ध्यति । पूर्वमीमांसादर्शने परमात्मन ऐश्वर्यमाधुर्यादीनां गुणानां साधनं कृतम्' ऐश्वर्यभावे ईश्वरोऽदृष्टकर्ता, पुण्यफलदाता, धर्मस्य प्रतिष्ठाता, सर्वशक्तिमांश्च तस्य स्वरूपं यज्ञादिकर्मं, भट्टकुमारिलादिभिर्वेदरक्षार्थमीश्वरखण्डनं कृतं यद्यपि तथापि न तेभ्यस्तद्रोचते, कथमन्यथा तैरेव स्वस्वनिबन्धेषु ईश्वरविषयकं मंगलाचरणं कृतं यदीश्वरवादिनस्ते न स्युः । तद्यथा—"विशुद्धज्ञानदेहाय, त्रिवेदीदिव्यचक्षुषे । श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥ इतिकुमारिलः—तन्त्र० उत्तरमीमांसादर्शने—ईश्वरस्य जगतो निमित्तकारणत्वमुपादनकारणत्वं चाभिमतम् । तस्य निमित्तकारणताविषये वेदान्तसूत्राण्यनेकानि लभ्यन्ते । तद्यथा—"जन्माद्यस्य यतः" "जगद्वाचित्वात्" इत्यादीनि । उपादानकारणताविषये च—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्" इत्यादीनि । अत्रभाष्यकारः भगवान् शंकराचार्यो लिखति—"प्रकृतिश्चोपादानकारणं च ब्रह्माभ्युपगन्तव्यं निमित्तकारणञ्च । एवं सर्वेष्वेव दर्शनेषु ईश्वरसत्ता लभ्यते । अन्तिमदर्शने वेदान्ते तु सा पराकाष्ठामधिगता ।

---



---

# भक्तियोगः।

—:*:—

ले०—चतुर्वेदी श्रीरामविलासशर्मा काव्यपुराणतीर्थः पुराणरत्नम्।

असारे संसारेऽस्मिन् भगवद्भक्तिरेव संसारार्णवात्तारयितुं समर्था। सा हि भक्तिः संसारसमुद्रात् भक्तजनान् तारयित्वा श्रीपरमात्मनः जगदैककारणस्य सकाशं नयति। अतः सर्वेषां भक्तजनानां कल्याणकरणे सैव समर्था। इह यद् यदस्ति तत्सर्वमपि विनशनशीलं सर्वेषामेव जन्यपदार्थानां नाशसम्भवात्। अत एवात्र क्षणिकपदार्थे रतिर्न विधेया।

भक्तिरेव परमात्मनः प्रियतमा, भक्तिमानेव नरः भगवत्प्रियः सम्भवति। "भक्तिमान् यः स मे प्रियः" इति भगवद्वचनात्। भजनं भक्तिः भज् सेवायाम् धातुतः स्त्रियां क्तिनिति सूत्रेण भक्तिपदस्य सिद्धिः। सा च हि भक्तिः प्रधानतया नवविधा।

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥ १॥

इति श्रीमद्भागवतवचनात्—

"भक्तियोगमुपाश्रित्य, मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च॥"

इति श्रीमुखतः सम्यगुक्तत्वात्। भक्तिमाहात्म्यं श्रुतौ "भक्तिरेव भूयसी, भक्तिपुरुषः" पद्मपुराणेतु—

"अलं व्रतैरलं तीर्थैरलं योगैरलं मखैः।
न तपोभिर्न वेदैश्च न ज्ञानेनापि कर्मणा"।
हरि र्हि साध्यते भक्त्या, प्रमाणं तत्र गोपिकाः।
कलौ–नृणां जन्मसहस्रेण भक्तौ प्रीति र्हि जायते॥
"कलौ भक्तिः कलौ भक्तिः भक्त्या कृष्णः पुरः स्थित"

इति वचनेभ्यः सर्वश्रेष्ठत्वमस्याः सम्भाव्यते। "भक्तास्तु तत्र निवसन्ति—यत्र" न तत्र सूर्य्यो भाति, तस्य भासा सर्वमिदं विभाति" इति श्रुतिः।

"सर्वस्मादधिकः स्नेहो भक्तिरित्युच्यते बुधैः।
सेवैव मूर्ध्वं नयति साक्षात् कारयति ह्यजाम्।
तस्मात् सा भूयसी भक्तिः सैका निःश्रेयसेऽप्यलम्।

अपि च "ब्रह्मादिनामसाध्यं तु साध्यं वै भक्तिशालिनामिति भक्तानां सर्वकार्य्यकरणे समर्थत्वं सूच्यते। अहो भक्तेरीदृशो महिमा, यया भगवत्सारूप्यं लभते। पुनः सृष्टिकाले जन्म, प्रलये व्यथनासम्भवाच्च। सहि जगदुत्पत्ति-स्थिति-प्रलयकारको भगवान् भक्त्या प्रसन्नीभूय "परित्राणाय साधूनामिति वचनबद्धः सन्नवतरति।

४

अजः खलु, ईश्वरः कथमवतरति तदा अवतारधारणे त्वस्य साकारविशिष्टत्वं सम्भवति । स तु निराकारोऽजन्मा च "निरंजनः परमं साम्यमुपैति" प्रमाणात् नास्य रूपं सम्भाव्यते । अत्रोच्यते—भगवतः रूपमस्ति "एषोऽन्तरादित्ये हिरण्मयः पुरुषः दृश्यते, हिरण्यश्मश्रुः हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्यः उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेति श्रुतिः अस्य रूपं पोषयति ।

नाहं वसामि वैकुण्ठे योगिनां हृदये न च ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारदेति ।

वाक्येनानेन भक्तानामेव हृदि तस्य निवासः सूचितः । अत्र शङ्क्यते—तर्हि विषमलोचनो भगवान् । अस्य सर्वव्यापकत्वं, सर्वमूर्तसंयोगित्वं, समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरमिति गीतावाक्यं कथं संगच्छते । अत्रोत्तरम्—परमात्मा सर्वत्रैव निवसति । यथा विद्युत् ( बिजली ) व्यापकरूपेण समस्तम्भस्य स्थले ( तारमे ) तिष्ठति, तथैव परमात्मापि सर्वत्र स्थावरजंगमादिषु निवसति । वर्तमानायामपि सर्वत्र विद्युत्-शक्तौ ( पावर ) तत्रैव प्रकाशो संजायते, यस्य खुटिकाप्रेरणं ( सुईच् इति हिन्दीभाषा ) क्रियते तथैव सर्वगतत्वेऽपि परात्मनः तत्रैव प्रकाश आविर्भावश्च सम्भवति यत्र तु भक्तास्तं भजन्ति । "ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्" । इति भगवदुक्तिश्च न विस्मरणीया ।

भक्तोनुग्रहकारकस्य परमात्मनो रूपधारणे बहुनि किन्न प्रमाणानि सन्ति । उदाहरणमेकं चात्र प्रदर्श्यते । आसीदम्बरीषो नाम-भगवद्भक्तिशाली राजा । एकदा दुर्वासा ऋषिः सह शिष्यैः समाजगाम । उवाच च राजन् ! बुभुक्षिता वयमिदानीं भोज्यसामग्रीं चोपनय, स्नानार्थं व्रजामो वयम् । इत्युक्त्वा सह शिष्यैः ऋषिः स्नानार्थं जगाम । कृतैकादशीव्रतो महीपतिरम्बरीषोऽचिन्तयत् । अद्य स्वल्पा खलु द्वादशी, द्वादश्यामेव पारणं विधातव्यं किमिदानीं करोमि, क यामि, मुनिरपि नेदानीं समागतवान् । द्वादश्यां तु अवश्यंपारणं कर्तव्यम् । "यदा भवेदतिबाल्पा द्वादशी पारणादिने । उषःकाले द्वयं कुर्य्यात् प्रातर्मध्याह्निकं च यत्" । मध्याह्नपर्य्यन्तकर्त्तव्या देवपितृसम्बन्धिनीः सर्वाः क्रिया निशीथादुत्थाय क्रमेण यावद् द्वादशीकला ततोऽर्वागेव समाप्य द्वादश्यामेव कुर्य्यादित्यर्थः ।

"महाहानिकरी ह्येषा द्वादशी लङ्घिता नृणाम् ।
करोति धर्महरणमितिशास्त्रोक्तमेव हि । अन्यथा इति शास्त्रमनिष्टं स्यात् ।

व्रतभंगभयाद् राजा संसारार्णवतारकस्य श्रीविश्वम्भरस्य चरणामृतमपिवत्। तुलसीमिश्रितनैवेद्यप्राशनं कुर्य्यात्। तदुक्तं स्कन्दपुराणे—

"कृत्वा चैवोपवासं तु योऽश्नाति द्वादशीदिने।
नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम्।

तदसम्भवेऽद्भिरपि पारणं कुर्य्यात् इति प्रमाणात्, चरणोदकं पीतमिति। तदनन्तरं मुनिः समागत्य योगबलेन तत्चरणोदकपानं विज्ञाय संजातरोषाद्रक्तलोचनः राज्ञः वधार्थं कृत्यानाम्नीं दानवीं जटातः समुत्पादयामास। भयभीतो राजा भगवन्तं तुष्टाव। सर्वान्तरात्मवित् भक्तभयापहारी भगवान् अम्बरीषरक्षणार्थं सुदर्शनं प्रेरयामास। सुदर्शनस्तु शीघ्रमेत्य राजानं ररक्ष। दुर्वाससं हन्तुंचोदचकत्। कृत्या तु भस्मतां गतवती। सुदर्शनाद् भीतो दुर्वासा आत्मानो मोचनेऽसमर्थः सन् पलायामास। सुदर्शनोऽपि दुर्वाससं हन्तुं पश्चादधावत्। आत्मरक्षणेऽसमर्थः ऋषिः ब्रह्मलोकं जगाम। रक्ष रक्षेति चाब्रवीत्। तच्छ्रुत्वा विधाता प्राह।—

"यथा खरश्चन्दनभारवाही, भारस्य वेत्ता नहि चन्द्रनस्येतिवत् त्वं भक्तानिष्टकारी वृथा एव जटाकलापं विभर्षि। नाहं रक्षणे समर्थः। भीतो ऋषिः शिवलोकमगमत् उवाच च मां रक्षेति। भगवान् शिवो निगदितवान्—ऋषे शृणु।

"महति प्रलये ब्रह्मन् ब्रह्माण्डोऽयं जले प्लुतः।
न तत्र नाशो भक्तानां सर्वेषां च भविष्यति" अतो नाहं समर्थः तव रक्षणे।

तदनन्तरं स ऋषिः विष्णुलोकं ययौ। रक्ष रक्षेत्युवाच। भगवान् विष्णुरुवाच। श्रूयताम् तावत्—

अहं भक्तपराधीनो ह्यस्वतंत्र इव द्विजः।
साधुभिर्ग्रस्तहृदयो, भक्तैर्भक्तजनप्रियः॥ १॥
नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना।
श्रियं चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परः॥ २॥
ये दारागारपुत्राप्तान् प्राणान् वित्तमिदं परम्।
हित्वा मां शरणं याताः, कथं तांस्त्यक्तुमुत्सहे॥ ३॥ भागवते।

अतः व्रजतु भवानम्बरीषसकाशम् स एव मे भक्तः भवदपराधं क्षमिष्यति। तच्छ्रुत्वा दुर्वासा ऋषिः राजानं प्राप्य क्षमां ययाचे। ततोऽम्बरीषः सुदर्शनं प्राह "भगवत्-समीपं गच्छ" सुदर्शनस्तु तथैवाकरोत्। अहो भक्तरक्षणे ईदृग्विधं भगवतः विश्वेश्वरस्य वात्सल्यम्। सत्यमेवैतत्। "न स्मरत्यपकाराणां शतमप्यात्मवत्तया" भक्तकृतशतापराधमपि न गणयति प्रभुः वात्सल्यात्। वा-

तत्स्थल्यन्तु "आश्रितदोषविस्मरणम्" इति बोध्यम्। यः नामसदृशमपि नामो च्चारणं करोति, तस्यापि कल्याणं सम्भवति। उदाहरणन्तु आसीदजामिलो नाम पापकारी ब्राह्मणः। वेश्यापरायणः स कुकर्मंरतः सन् कालमतिपातयामास। नारायणो नाम तस्यैको बालक आसीत्। मरणसमये स ब्राह्मणः स्वपुत्रं नारायण-माहूयामास। प्रियपुत्र नारायण! समागच्छ, मे प्राणाः बहिर्भवन्तीति। अजा-मिलस्तु स्वपुत्रं नारायणमाह्वयत्, नतु पुनः संसारार्णवतारकं भगवन्तं नारायणं तथापि दीनदयालु भगवान् स्वपार्षदान् सम्प्रेषयामास तमानेतुं वैकुण्ठलोके। तस्मिन्नेव काले यमाज्ञया यमकिंकरा अपि अजामिलं नेतुं समागच्छन्। विष्णु-दूतान् विलोक्य यमदूता अपृच्छन्—के यूयं, किमत्र वाऽऽगमनकारणं श्रीमतामिति ज्ञातुमिच्छामो वयम्।—

विष्णु-पार्षदा ऊचुः। भो भो यमदूताः! विष्णुदूता वयं अजामिलं नेतुं समागता स्मः। तच्छ्रुत्वा यमकिंकरा अवोचन्। कथं पापकारिणमजा-मिलं नेतुं सम्प्राप्ता यूयं, वर्णाश्रमाचारकर्मधर्महीनः पापकारी अयं ब्राह्मणः वैकुण्ठे गमिष्यति। भक्तिरहितः पुरुषः "पतन्ति नरकेऽशुचाविति प्रमाणात् नरके पतन्ति। न तु भक्तसुशोभिते विष्णुलोके। अतः परित्यजन्तु यूयमेनं ब्राह्मणमिति। विष्णुदूता अवदन्। न वयं व्रजिष्यामः, भवन्त एव व्रजन्तु। ततः विष्णुपार्षदतेजोऽसहमाना दूता यमराजसमीमं ययुः। राजन्! नानेतुं शक्ता वयमजामिलम्। न विष्णुदूततेजःसहने समर्था वयमित्यतः पलायिताः भवतः शरणं सम्प्राप्ता स्मः। यमस्तान् प्रत्याह। दूताः शृणुत—भागवते—

जिह्वा न वक्ति भगवद्गुणनामधेयं।
चेतश्च न स्मरति तच्चरणारविन्दम्।
कृष्णाय नो नमति यच्छिर एकदाऽपि,
तानानयध्वमसतोऽकृतविष्णुकृत्यान्॥ १॥

"तानानयध्वमसतो विमुखान् मुकुन्दपादारविन्दमकरन्दरसादजस्रम्। निष्किंचनैः परमहंसकुलैरसङ्गै र्जुष्टाद्गृहे निरयवर्त्मनिबद्धतृष्णान्।

एवं भूतं जनमानयध्वम्। किन्तु—

ते देवसिद्धपरिगीतपवित्रगाथा, ये साधवः समदृशो भगवत्प्रपन्नाः।
तान्नोपसीदत हरे र्गदयाऽभिगुप्ता नैषां वयं न वयसः प्रभवाम दण्डे॥ १॥

एतेन भक्तजनदण्डप्रदानेऽस्य यमस्य असमर्थत्वं ज्ञायते।

भक्तिस्तु भगवन्नामसंकीर्तनादिना सम्भवति। सा हि, मानसी, कायिकी, वाचिकी चापि भवति। मानसीं भक्तिं दर्शयति—

त्रेधा भक्तिर्निगमविहिता केशवे मोक्षहेतुः,
सख्यं श्रद्धा स्मरणमनिशं नैजदेहार्पणं च ।
औदासीन्यं स्वतनुभरणे पोषणादौ स्वकीये,
न्यस्यात्मानं भगवति हरौ मानसी भक्तिरेषा ॥ १ ॥
कर्णाभ्यां तच्छ्रवणमनिशं सज्जनानां मुखाब्जात्
नित्यं सेवामधुरिपुगृहे मार्जनादिप्रकारैः ।
अर्चाविष्णोर्विविधसुरभिद्रव्यलेपादिदेहे,
पंचांगाद्यैर्नमनमुदितं वन्दनं कायिकीयम् ॥ २ ॥
विष्णोर्नाम्नां कथनमनिशं कीर्तनं तद्गुणानां।
दास्यं कर्माखिलमपि कृतं केशवस्याज्ञयास्तु ।
तत्संतुष्ट्यै स च मम गतिस्तस्य दासोऽस्मि नित्यं ।
सर्वं विश्वं हरिरिति वचो वाचिकी भक्तिरिष्टा ॥ ३ ॥

भक्तलक्षणं तु—
सर्वेषां हितवाक्यानि ये वदन्ति नरोत्तमाः ।
दीनसेवापरा ये च—ते वै भागवतोत्तमाः ।
इति विचार्य्य यदि वयं भजिष्यामः तदा'
"अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुच" [ इतिवाक्यं चरितार्थयिष्यति भगवान् ।

अन्ते निवेदयामि यत्—अये भक्तवत्सल ! दीनपालक !
"संसारसिन्धौ पतितोऽस्मि देव ! त्वं तारकः शुद्धसनातनोऽसि ॥
धर्मस्य हानिर्भवतीति जानन् नायासि मे चित्रमिदं विभाति ।
इतिवचनं परिगृह्य अत्र भारते चावतीर्य नष्टां गतां स्वीयां भक्तिं प्रयच्छतु ।

---

# भारती-वन्दना ।

साहित्याचार्य-वर्गीयः श्रीवैद्यनाथमिश्रो'विमलः'
'पूर्णिमा'–सम्पादकः, संस्कृतकालेज, मुजफ्फरपुरम् ।

वरदे ! सुखदे ! नर्मदे ! विश्वविमोहिनि ! दात्रि !
वासं कुरु सह वीणया, रसनायां मम धात्रि ! ॥ १ ॥
विश्वपालिके ! सुखनिधे ! पूर्णयतु मम कर्म ।

तव चरणकमलयो रतिः स्याद्देहि मे सुशर्म ॥ २ ॥
वासनोदके पूरिता भव सरस्वति ! गुणधाम !
सहृदयहृदयनिवासिनि ! विश्वेश्वरी तव नाम ॥ ३ ॥
तिष्ठामो दुःखिनो वयमुद्धर त्वं पापघ्नि !
करुणावरुणालये विधेहि दयां शत्रुघ्नि ! ॥ ४ ॥
प्रसादं कुरु शारदे ! सत्काव्यरुचिस्मे देहि ।
विरमतु मम हृदये तु सा भणितिस्तव विदेहि ! ॥ ५ ॥
तव प्रसादेन हि जनास्तिष्ठन्ति जगदीशि !
कालिदासप्रभृतीनां जयन्ति गिरो वागीशि ! ॥ ६ ॥
तव सन्निधौ तिष्ठत्ययं, किं क्रियते जनेन ।
कथय कथय गीर्वाणि ! भक्तोऽयं हृदयेन ॥७ ॥
दीनदशां मम दर्शने, लज्जा त्वान्नायाति ।
अवहेलनास्माकं नहि, पीडां वहुलां दाति ॥ ८ ॥
आयाहि हे भक्तपालिके ! भक्तानामभयाय ।
प्रतीक्षन्त इमेऽधुनान्धकारनाशाय ॥ ९ ॥
देवि ! सुभारति ! वाक् ! कर्त्रि दयां भक्तोपरि ।
शीघ्रं कुरु प्रियवल्लकि ! हे मम हृदयचरि ! ॥ १० ॥

---

# आश्रमधर्म्मो मनुष्यजीवनं च ।

ले०—पं० लक्ष्मणमिश्रो व्याकरणकाव्यतीर्थः ।
सरस्वतीसदनपुस्तकालय पहरा-गया ।

संस्कृतसाहित्ये सर्वे नियमा ( कानून ) धर्म्मशब्देनैव व्यवह्रियन्ते स्म । यतो धर्म्मभावनयैव ते निर्मिता अभूवन् । अतश्चात्र विवेकपूर्वकं स्वच्छन्दमनोवृत्त्यवरोधाय कृता भोगमर्य्यादा न च प्रवृत्तिनिमित्ता । अत एव वर्ण इवाश्रमोऽपि धर्म्म एव कथ्यते न तु विभागः । वर्णा इव चत्वार आश्रमा अपि परस्परं सम्बद्धाः परस्पराश्रिता एव । पूर्वपूर्वस्य पालनं विनोत्तरोत्तरस्य पालनमसम्भव्येव । मनुष्यजीवनं च शरदां शतमेष्वेवायुषश्चतुर्षु समेषु चाश्रमनामधेयेषु भागेषु यथाक्रमं विभक्तं विद्यते । तदाह मनुः—

चतुर्थमायुषो भागमुषित्वाद्यं गुरौ द्विजः ॥
द्वितीयमायुषो भागं कृतदारो गृहे वसेत् ॥

यथा च २५ वत्सरात् यावत् मनुष्यजीवनस्य पूर्वो भागो ब्रह्मचर्य्यश्चैमेवमन्येषामपि ।

ब्रह्मचर्य्यं नाम मनसा वचसा कर्म्मणा मैथुनेच्छापरिहारपूर्वकं वीर्य्यधातुपरिरक्षणम् । जीवनमूलं वीर्य्यमेव तदुक्तं भावमिश्रेण—

शुक्रं सौम्यं सितं स्निग्धं बलपुष्टिकरं स्मृतम् ॥
गर्भबीजं वपुस्सारो जीवस्याधार उत्तमः ॥
जीवो वसति सर्वस्मिन् देहे तत्र विशेषतः ॥
वीर्य्ये रक्ते मले यस्मिन् क्षीणे याति क्षयं क्षणात् ॥

रेतःपाते ब्रह्मचर्य्याश्रमभङ्गमाह मनुः—

एकः शयीत सर्वत्र न रेतःस्कन्दयेत् क्वचित् ॥
कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ॥

निर्व्यापारस्य ब्रह्मचारिणश्चेतश्चाञ्चल्याद्व्रतपरिपालनं दुष्करमिति कृत्वाऽस्मिन्महति व्रतावसरे मनुष्यत्वसम्पादनाय तद्धर्म्मत्वेन महान्ति महान्ति कर्म्माणि तत्कर्तव्यत्वेनाम्नातानि विद्यन्ते, तानि चाकृत्वा न मनुष्यो मनुष्यो भवितुमर्हति । उभयलोकश्रेयस्कराणि तानि यथा प्रतिज्ञासूत्रधारणपुरस्सरं यज्ञसूत्रानुरूपं सशाखायोस्त्रय्या अनुलोमं विलोमं प्रतिलोमं वारत्रयं च सभाष्यमभ्यसितुं प्रतिज्ञाव्रतपरिपालनं, गुर्वग्निपरिचर्य्या सर्व शास्त्राभ्यासश्चेति । तदाह मनुः—

एवं चरति यो विप्रो ब्रह्मचर्य्यमविप्लुतः ॥
स गच्छत्युत्तमं स्थानं न चेहाजायते पुनः ॥

एवं वीर्य्यज्ञानयोर्लाभे संजाते सर्व-जीवनं मनुष्यस्य सुखमयं सम्पद्यते । एतस्याभावे मूलं नास्ति कुतः शाखेति लोकोक्त्यान्ये आश्रमा अशक्या एव परिपालयितुम् ।

ब्रह्मचर्य्योत्तरं गार्हस्थ्यकालः । तदुक्तं श्रीयाज्ञवल्क्येन मनुना च—

"अविप्लुतब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत ॥"
"अविप्लुतब्रह्मचर्य्यो गृहस्थाश्रममाविशेत् ॥"

एतेनापरिपालितव्रतस्यायमाश्रमो निषिद्ध एव । गार्हस्थ्यं च सन्तानोत्पादनेच्छया दारसंग्रहपूर्वकं गृहकर्म्मानुष्ठानमेव । अत्र वेदशास्त्रोदितकर्म्मानुष्ठानं, धर्म्मेण जीविकोपार्जनं मातृ पितृगुरुशुश्रूषा, इत्यादीनि कार्य्याणि गृहस्थधर्म्मत्वेन निरूपितानि विद्यन्ते । एतानि सर्वाणि यथाविधि सम्पाद्य गृहस्थो वनं विशेत् । तदुक्तं मनुस्मृतौ—

महर्षि-देव-पितॄणां गत्वानृण्यं यथाविधि ॥
पुत्रे सर्वं समासज्य वसेन्माध्यस्थमाश्रितः ॥

ज्ञानसन्तानसम्पत्तिवृद्ध्या समाजपरिरक्षणमेवास्याश्रमस्य रहस्यम् । भोगेच्छयानृतावृतावपि स्त्रीसेवनमधर्म्म एव । स्वच्छन्दचारिता चैषा न च धर्म्मः । धर्म्मे तु विवेको मर्य्यादा च भवतः । गृहस्थधर्म्मोऽपि ब्रह्मचर्य्यमिव प्रायः लुप्त एव । साम्प्रतं वर्तमानश्चषोऽधर्म्म एव ।

ततश्च वानप्रस्थाश्रमः । वनाश्रमो नाम राज्यपरिवारपरित्यागानन्तरं निदिध्यासनाय वनाश्रयणम् । वेदशास्त्रोदितज्ञानानां श्रुतानां बुद्ध्याऽनुमतानां च सत्यमिदं नवेति समाधिना प्रत्यक्षीकरणायावसरग्रहणमस्य रहस्यम् । त्रिविधैषणा परित्यागाभ्यासो, योगो भक्तिर्ज्ञानं वैराग्यमित्यादयस्तद्धर्म्माः । अन्ते च प्रतिज्ञातप्रतिज्ञोत्तरणात् प्रतिज्ञासूत्रस्य शिखायाश्च त्यागः संन्यासाश्रयणञ्च ।

तदाह मनुः—दशलक्षणकं धर्म्ममनुतिष्ठन् हि मानवः ।
वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ।

अथ संन्यासः । एष च जीवात्मोपाधिपरित्यागानन्तरं परमात्मत्वलाभाय योग्यतामात्मन्याधातुं त्रिविधैषणा परित्यागः । समदर्शित्वं, सर्वत्र ब्रह्मभावनाऽसक्तित्वं लोकोपकारश्चेत्यादयस्तद्धर्म्माः । सर्ववासनापरित्यागेन विशुद्धात्मस्वरूपज्ञानमस्य रहस्यम् । तथा च मनुः—

एवं संन्यस्य कार्य्याणि स्वकार्य्यपरमोऽस्पृहः ।
संन्यासेनापहत्यैनः प्राप्नोति परमां गतिम् ॥ इति ।

इमे आश्रमा आध्यात्मिका वैदिकाश्च श्रेयःप्रेयोनिदानभूताः प्रधानमङ्गं सनातनधर्म्मस्य जीवनं चार्य्यजातेः सन्ति । एतस्याश्रमचतुष्टयस्य परिपालनेन मनुष्यो जीवनपूर्णतामधिगम्य परमात्मत्वाय कल्पते न च पुनरावर्त्तते ।

साम्प्रतमाश्रमाः शास्त्रेष्वेव । आर्य्यजातेरद्यावधि वर्त्तमानत्वे वर्णाश्रमा एव प्रधानं हेतुः । स एव सनातनधर्म्मो हिन्दूधर्म्मो वा । अस्य पुनरुत्थानं पुनरुद्धारं पुनः शोधनं विनास्य धर्मस्य पुनरुत्थानं कल्याणं वाऽसंभवि । संशोधनं चानया रीत्या यथा छात्राः परीक्ष्य गुणानात्मन्याधायैव परीक्षोत्तीर्णास्तत्तदुपाधिभाजो भवन्ति तथा वर्णा आश्रमिणश्च वर्णाश्रमोचितधर्म्मात् तल्लक्षणानि वाऽऽत्मसु प्रत्यक्षीकृत्यैव यथार्थनामानो भवन्तु । अन्यथा गौणनामान एव ते तथा । न केवलेन विशेषणग्रहणेन विशेष्यास्तद्वन्तो भवन्ति । तदाह मनुः—

यथा काष्ठमयो हस्ती यथा तृणमयः पुमान् ।
तथा विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ।

विद्वद्भिश्चास्य पुनरुद्धाराय सामूहिको महान् प्रयत्नश्चाशुतरामेवानुसंधातव्योऽनुष्ठातव्यश्च । विद्वांसो धर्म्माचार्य्याश्च सर्वप्रथमं स्वान् स्वान् पुत्रान् शिष्यांश्च ब्रह्मचारिणो निर्माय सर्वेषां पुरो निदर्शनमादर्शं वा स्थापयन्तु येनान्ये तदनुकुर्य्युरिति ।

# भारतीपञ्चकम् ।

ले०—बालकृष्णभट्ट शास्त्री ।
[ साहित्याचार्यः काव्यतीर्थश्च ( गुप्तकाशीगढ़वाल ) ]

वेदाः पुराणवचनानि महोत्तमानि,
यन्त्राणि विस्मयवहान्यपि वैद्युतानि ॥
ज्ञानं तथोपनिषदां निभृतं च यस्यां,
सा भारती विजयते जगतां शिवाय ॥ १ ॥

यां भारतीं समधिगत्य महेन्द्रमुख्याः—
मन्वादयो नृपवरा विधिना शशासुः ॥
लोकत्रयं सकलमङ्गलमञ्जुमूर्तिः—
सेयं सदा जयति नः शिवशासनाय ॥ २ ॥

श्रीकालिदास-भवभूति-सुबन्धु-दण्डि—,
श्रीहर्ष बाणकवयोऽपि च यामवाप्य ॥
अद्यापि ये जगदिदं सततं तथैव,
जीवन्ति किन्न कथयन्तु समुज्ज्वलन्तः ॥ ३ ॥

यामाश्रिता व्यासमुखा मुनीन्द्राः,
दिवं गता येऽप्यमरत्वमाप्ताः,
तां भारतीं भव्यगुणप्रसूतिं,
को वा कुधीर्वक्तुमलं मृताञ्च ? ॥ ४ ॥

अनेकविज्ञानघनाऽवनिर्या, सन्ततसाहित्यसुधाम्बुराशिः,
सा सर्वभाषाजननी पुराणी, विराजतां भारतभारतीयम् ॥ ५ ॥

---

# भारतावनत्युन्नतिवीजविसृष्टिः ।

लेखकः—के. टी. रामशरणशर्म्मा शास्त्री ।
आर० ई० आई० कालेजाध्यापकः—अगंलनगरम् ।

—:※:—

पञ्चत्रिंशत्कोटिपरिमितभारतीयसङ्ख्यायां स्वल्पातिस्वल्प एवैवम्भूतोऽनुभूतोत्कृष्टभारतासाधारण-धन-जन-कलाकौशलाध्यात्मिकादिसम्पत्ति रिदानीन्तनो जनगणे, मनो यस्यैतिह्याधीतिविवित्तिमन्मतेः साघातमेवं स्याद् यदस्माकं दशा

हीना, अस्मदधीना चोद्धृतिरस्याः। नैतावदेव, अपि तु या विधया वयं स्वजीवनं निर्वहामो यया चोपेक्षया प्रतिवर्षम् लक्षशः पुत्रान्[1] उत्पाद्य भारतीयसङ्ख्यामेधयामस्तया सुतमामेन निश्चीयते यदस्यां परिस्थित्यां नो नोऽल्पकल्पमपि दुःखम्, अपि तु एतस्यामपि सुख्याम एवेत्यगत्यानुयोगोऽयमुत्पद्यते—'किमवश्यमस्माकमियं दशेति' त दैवैतद्विचिकित्सासमाधित्सोद्धृत्या मपरदेशदशाभिस्स्वदेशदशां तुलयितुं मानसं समाज्ञापयतीति किञ्चिदिह स्वापरदेशपरिस्थित्यनुमित्सावश्यकत्वम्।

विनायत्तामेरिका जर्मनी जापानादि प्रदेशेषु पठितसङ्ख्या १००% भारते च ६% येषुच न केवलं लेखनभाषणासादितसम्यक्पटुत्वयाप्यमानकालानामेवापि स्वधीतवर्णमालानामपि गृहीतिरित्येतदस्माकं शिक्षाप्रौढित्वम्। तथात्वे चात्र शिक्षेच्छाया अनुमितितो नेमे नेमे[2] भारतीया उद्धारपूरम् व्यवहरन्तीत्येवास्माकं प्रसत्त्यासत्तेरनुमापकम्। स्यादपि च तन्न कथम्, यतो हि आमेरिकाणां प्रतिवर्षम् प्रतिजनम् १११६) मुद्राणामायः। वैनायत्तानाञ्च ७५०) कार्षापणानाम्। शार्मण्यानाम् ४६८) कार्षिकाणाम्, पारसीकानाञ्च ५४६) रूप्यकाणाम्। भारतीयानाञ्च ३०) रूप्यकाणां प्रत्यब्दमनुजनमाय इति पणपञ्चके दैनिकाये उपनयनोद्वहनादि गृहस्थाश्रमकार्यसञ्चालनं वसनौषधिवस्त्रादि च विप्रकृष्टे आस्ताम्, स्वपरिवारोदरदरीपूर्तिमात्राभिध्यान्[3] बुधानपि। पाकाकुलतद्गृहयुवतिप्रेषितापत्यानां "हा! बाबा! नास्ति तैलं न च लवणमपी" त्यादिवाचां श्रुतिरन्वहं दुःखाकरोति। एवञ्च यदोदरपूर्तिपर्य्याप्तमशनमपि न लभ्येत तदा दीर्घायुष्ट्वं कमठीस्तन्यायितमेवेति कस्य वैमत्यम्? यच्च भारतीयानाम् प्रतिशतमायुः २४ वर्षाण्येव, वैनायत्तानाञ्च प्रतिशतम् ५१शरदः, आमेरिकानाञ्च ५० समाः। पारसीकानाम् ४८ सँव्वत्सराः, शार्मण्यानाम्, पेटलानाञ्च ४८ अब्दाः, जापानीयानाञ्च ४४ हायनाः, एवंकृतायामन्यदेश्यपुरुषायुषतुलाऽऽरूढयां प्रत्यक्षमेवेति नानुमित्यादिकमपेक्षते।

जनुर्मृत्यू अप्यधिकोविहत्यानामन्यदेशीयापेक्षया। विनायत्ते (England) सहस्रपरिमितजनसङ्ख्यायाम् २७ उत्पद्यन्ते, पञ्चदश च तेषु करालकालकवलिता भवन्ति। इटलीप्रदेशे ३२ जनुर्धारयन्ति, एकविंशतिपरिमिताश्च कीनाशनिकेतनातिथयो बोभूयन्ते। जर्मनप्रदेशे ३२ जन्म गृह्णन्ति, १८ व्यापद्यन्ते। जापान-

१ पुत्राश्च दुहितरश्चेत्येकशेषः। २ एकत्र नेमशब्दोऽर्द्धवाचीतरत्र न + इमे इति च्छेदः। ३ अभिध्या, चिन्ता।

प्रदेशे ३२ प्रसूयन्ते ११ निरसूभवन्ति, किन्तु भारते प्रतिसहस्रम् ३८ सङ्ख्याका जना जननिमासादयन्ति ३२ सङ्ख्याकाश्च यमपुरीपथिका जायन्ते ।

बालमृतिरपीदानीमाख्यानविषयी क्रियताम् । विनायत्ते यावन्तो बाला उत्पद्यन्ते तेषु सप्त % चरमं निश्वसन्ति । फ्रांसप्रदेशे चाष्टौ % प्रतिशतं शरव्यायमाणाः कालमृगयोरवगम्यन्ते । इटलीजापानप्रदेशयोश्च १६ % मृत्युमनुभवन्ति । जर्मनप्रदेशे च १० % किन्तु भारते बालविंशतिः प्रतिशतं विकरालकालगालग्रासा बोभुवति । नैतेषु तद्बालानां सङ्कलना ये जनुषैव मृता उत्पद्यन्ते प्रतिवत्सरमनुमितितो लक्षविंशतिसङ्ख्याका बालाः कालास्ये पनीपत्यमाना – केचिच्चायुःशेषतयाऽवशिष्टा अपि रुग्णाः निरोजसः मृतकल्पा अल्पावधि जीवन्तोऽवलोक्यन्ते, हन्तेति धनजनसम्पत्तिरस्माकं भारतीयानाम् ।

अधुना नः सम्मानप्रतिष्ठयोश्चक्षुष्पातो विधीयाम् । यावन्तोऽत्र विभागास्तत्र सर्वत्र वयमेव भृत्याः । सेनापत्रालयन्यायालयप्रहरिधूम्रगतिप्रभृति विभक्तिषु कतमा ? न स्याद्यत्रास्माकं नियुक्तिः । तत्र तत्र चास्माकं निष्प्रत्ययत्वात् सर्वप्रथम एकोऽधीशो ( Controller ) समुपात्तसर्वाधिकृति स्तिष्ठति, सोऽस्मान्मर्कटवन्नर्तयतु, किङ्करतोऽधोटूत्वे वा परिवर्तयतु, श्ववृत्तिसेवाश्रृङ्खलाबद्धा वयं नानुस्वारं नापि विसर्गं वा वक्तुमलामः । समुत्तीर्णसर्वोच्चपरीक्षा अपि वयं न तत्पदमप्यर्हामो यल्लब्धस्वल्पोपदेशा वैदेशाः । यैः पथिभिस्ते यात्रायातं विदधति तेष्वस्माकं पदार्पणमपि कृपाणतीक्ष्णधाराधावनमेव । चर्व्यं भोज्यलेह्यचोष्यै यैः पदार्थैं स्ते स्वशरीराणि पोषयन्तः समूर्जस्वला अवलोक्यन्ते, यादृंशि वा तेषां वस्त्रादीन्यन्यानि विविधसाधनानि तादृश्यस्माकं बन्धूनां स्वप्नेऽपि दुर्लभानीति प्रत्यक्षमेव सर्वमवलोक्य कः सन्दिह्याद् भारतावनतौ ? न कोऽपीति ।

किन्तु किमेतस्य सर्वस्य मूलमिति जिज्ञासाया मुदश्चन्त्यां केचनाधन्या लोकन्तृणम्मन्या, हरिजनसमाजास्पृश्य१विश्वस्ताश्रम पदेशोपार्जितात्मसात्कृताशेषसम्पत्समुत्पादिताप्रतिमहर्षाः स्वकपोलकल्पितानल्पजल्पविविधवेदपुराणेतिहासकूच्छ्लोक-जगद्बालिशजनवञ्चनोत्पादिततत्सदस्योत्कर्षाः, यथेच्छापीताभ्यवहृतम्लेच्छश्वपचचर्मकाराः, द्रुतिकरकरानीताम्बुपाचितधान्याः ।

अस्पृश्यस्पर्शंतत्सहोष्टिप्रत्यवसितिविह्वतीत्यादि विविधतदाचारव्यवहार-

---

१ विश्वस्ता विधवा समे ।

प्रचारातिवाहितसमया अपि शुद्धिमयाः, चिरोढरूढिभयङ्करा अपि भव्यनव्यसभ्यक्षेमङ्कराः 'स्वधर्मे निधनं श्रेयः परमधर्मो भयावहः' इति विस्मारं विस्मारम् लोलुवाधार्मिकयशसाम्, पोपुवा निश्शेषास्पृश्यजातिजलाशयस्रोतसाम्, चातुर्वर्ण्याचारव्यवहारनियन्त्रणत्रोटकाः धर्मगलघोटकाः 'पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितं' इत्युद्घुष्य विश्वामित्रो विश्वाऽमित्रः, वयं विश्वमित्राः, कणादः कणादो वयमपि [१]कणादाः पतञ्जलिः पतञ्जलिः वयमपि पतञ्जलयः,[२] चतुराशनश्चतुराननो वयमपि चतुराननाः[३]। नारायणो नारायणः[४], कृष्णः, जनार्दनश्च, वयञ्च स्थलायनाः, गौराः, जनरक्षकाश्च। पशुपतिः खलु पशुपतिः, भूतेशः, कृत्तिवाश्च, वयम् नरपतयः, मनुष्येशा, विविधवसनवसश्च। विनायको नूनं विनायकः[५] एकदन्तः, गजानश्च, वयन्तु नैकनायकाः द्वात्रिंशद्दन्ता, नराननाश्च। अनङ्गः किलानङ्ग एव वयं साङ्गाः। दक्षो [६]नैजप्रसवरक्षणेऽदक्षः वयं नैजप्रसवरक्षणे दक्षा इत्यादिभङ्ग्या पूर्वर्षिषु देवेषु चात्मनाम्, तथा—यशोदा, यशोदामा अपि यशोदाः सुमित्रा, इमा अपि सुमित्राः। रुक्मिणी, रुक्मिणी, इमा अपि रुक्मिण्यः। गिरिजा, काली, शिवा[७] च, इमास्तु मनुष्यः गौर्यः, शिवाश्च। पद्मालया, पद्मालया, अब्धितनया, हरिप्रिया[८] च इमास्तु इष्टिकालयाः मनुतनुजनुर्जनुषः, नरप्रियाश्च। विदेहजा, विदेहजा, कृतरावण[९]निशान्तनिशान्ता, निशाचरीसहचरी च, इमास्तु सदेहजाः; कृतनैजनिशान्तनिशान्ताः, योषिद्वर्यसहचर्यश्च, एवं स्वपत्नीनां देवर्षिपत्नीषु च कुत्रचित्साम्यमितरत्राधिक्यञ्च प्रदर्शयन्तः 'श्रुतिस्मृतिप्रदर्शितमार्गमनुसृत्याद्याप्यस्पृश्यानामस्पृष्टिः, तैः सहानुष्टिः, देवालयतत्प्रविष्टौ चानिष्टिः, कूपादिजलादानानादिष्टिः तैः सहासनाशनपानादिव्यवहृतिव्यष्टिः, इत्याद्येव तथाभूतभारताधःपातनिदानमतो नव्यत्वमये समयेऽस्मिन् धर्मो वर्षीयान् न वरीयान्, प्रणाली च वर्षीयसी न गरीयसीति कणभक्ताक्षचरणसद्रक्षाणामस्माकमादेशोननुसृत्यास्पृश्येभ्योऽपि सर्वाधिकृतयो दीयन्ताम्। जगदीट् सर्वसृष्टे रीष्टे कथं तदैते न्यूनाः? स्पर्शादिभिर्न कतमोऽपि पतति, इति सर्वं वर्णैकीभावमेव भवभूषणभारतोन्नतिहेतुमभिदधति।

---

१ कणानत्तीति सः, पक्षे कणाः जीरकाणि। २ पतन्तोऽञ्जलयो यस्य येषाम्वेत्युभयत्र समानम्। ३ चत्वारि आननानि यस्य, पक्षे चत्वारिदन्त-जिह्वा-ष्ठीवन-कुवाच्यानि आननेषु येषाम्। ४ नारे जले अयनं यस्य। ५ विगतो नायको यस्य। ६ प्रकृष्टः सवो यज्ञस्तस्य रक्षणे, पक्षे प्रसवः प्रसूतिस्तद्रक्षणे। ७ शिवा, शृगाली, पक्षे यासु शिवमस्तीति ताः अर्शआद्यच्। ८ हरिः, सिंहः कपिः विष्णुम्। ९ कृता रावणस्य निशान्ते गृहे निशाया अन्तो यया।

इतरे च शुष्काङ्गलभाषामधिगत्य 'अस्मत्प्राचीना वन्यौकसः, (१)वयमवन्यौकसः। ते धृतखरनखरजटाः, वयं कर्तितनखधृतालकच्छटाः। ते नग्नशिरस्काः, वयं धृतशिरस्त्र (Hat) शिरस्काः। ते धारितोपवीताजिनमुञ्जमलमल्लकाः, वयं धारितोपवीताजिनगैलिस (Galice) बेल्ट (Belt) हाफपेण्टाः (Half-Pent) ते धृतकाष्ठपादुकापादाः, वयं सन्नद्धसुपालिश (Polish) बूट-(Boot) पादाः। ते काष्ठघर्षितदन्ताः, वयं सुकोमल ब्रश (Brush) घर्षणसञ्जातशुद्धिदन्ताः। ते हस्तधृतपवित्रपवित्रीकाः, वयं धृतरत्नप्रत्युप्ताङ्गुलीयकाः। तेऽनुपृत्रिमफल(२)मूलाशितम्भवाः, वयं संस्कृत्रिमकेक-(Cack) बिस्कुट (Biscuit) कुक्कुटाण्डाशितम्भवाः। ते वृषणविषव्यापृति-सम्वर्द्धित परेशसाक्षात्कृत्याशापाशाः, वयं क्षुण्णप्रहीणरूढि-समारोपितोत्कृष्टपद्धतिदासाभिलाषाः ते परार्थावलालोकन सञ्जातवेपथवः, वयं तदवलोकन सञ्जातसमानन्दथवः। ते पात्रे (३) समिताः, वयं पात्रे समिताः। ते (४) गेहे नर्द्धिनः, वयं गेहे तर्द्दिनः। ते विभूतिमन्तः,(५) वयं विभूतिमन्तः। एवं स्त्रीँस्तथा—तेषां पत्न्य एकपत्न्यः, अस्माकमनेकपत्न्यः। तेषां त्वनुपानत्पादाः, अस्माकं धृतोच्चपाष्ण्युपानत्पादाः। तेषां सापवृतित्वाददृष्टान्यपत्तनहट्टाः, अस्माकमनपवृतित्वाद्दृष्टानेकपत्तनहट्टघट्टाः। तेषां वल्कलधारिण्यः, अस्माकं चीनांशुकादिधारिण्यः। तेषां वन्यपत्रच्छत्राः, अस्माकं धारितसुवस्त्रच्छत्राः। तेषां धात्रीभोजिन्यः,(६) अस्माकं धात्रीभोजिन्यः। तेषां कामुकप्रार्थनाऽपट्व्यः, अस्माकं कामुकप्रार्थनापट्व्यः। तेषां शालीनताऽवि .र्जिता, अस्माकं शालीनताविवर्जिताः। इत्थं स्वपक्षं श्च गरयन्तो नव्यसभ्यतामनुसारमनुसारम् विधवोद्वहनापवृत्यभावादिकमेव भारतह्रसिमनिदानमहर्निशं निगदन्ति।

(अपूर्णा)

---

(१) न वन्यानि ओकांसि येषाम्। (२) अनुपृत्रिमफलमूलान्याशितम्भवो येषाम्।

(३) पात्रे, सुपात्रे समिताः सङ्गताः पक्षे पात्रे समिता भोजनसमये एव सङ्गताः।

(४) ऋद्धं धान्यम् तद्वर्तते येषु इति इन् ततो नकारेण सहसन्धिः।

(५) एकत्र विभूतिर्भस्म अपरत्र सम्पत्तिः।

(६) धात्रीणां धात्रीफलानां भोजिन्यः उत्तरत्र धात्रीणामुपमातॄणां भोजिन्यः पालयित्र्यः।

# अभिनन्दनपत्रम् ।

—०❀०—

[ काठियावाड़मण्डलान्तर्गतप्रभासक्षेत्रान्तःसंपाति-श्रीगुप्तप्रयागक्षेत्रे श्री-शुक्लयजुर्वेदान्तर्गतमाध्यंदिनीशाखाध्यायिकाश्यपगोत्रि श्रीमेघजिद्वंशावतंस पण्डित-प्रवर महोपाध्याय-धर्मशास्त्राचार्य विद्यावागीश-सनातनधर्ममार्तण्ड-तर्कालंकार-प्रभृतिविरुदावलिविभूषित-श्रीरेवाशंकरशर्मानुष्ठित महारुद्रयागप्रसंगे संवत् १९९१ वैशाखशुक्ले भृगुवासरे तद्गुणानुरागिसज्जनवृन्दैस्तस्मै समर्पितम् । ] यथा—

श्रीमानुनेवालसुविप्रजातिः श्रीदेलवाडाकर इत्युपाख्यः ।
श्रीमेघजिद्वंशविवर्धनोऽसौ रेवादिकः शंकरनामधेयः ॥ १ ॥
गुप्तप्रयागे वररुद्रयागं चकार सद्धर्मधिया क्रमाब्दे ।
भूभक्तिदुर्गेशविशाखिपक्ष शुक्ले दशम्यां शशिवासरे च ॥ २ ॥
श्रीकुंकुमामेघजितोः सुपुण्यैः संप्राप्तसद्वैभवभागधेयः ।
अखण्डसौभाग्ययुत प्रभावती-स्वधर्मपत्न्या सहितः स दीक्षितः ॥ ३ ॥
श्रीलेकुवेशो रणछोडनामा चैवं दयाशंकर गौरिवेशः ।
द्वौ भ्रातरौ तस्य सहायरूपौ क्रियाविधौ साश्रयतः प्रवृत्तिम् ॥ ४ ॥
श्रीरेवा करः शास्त्री श्रीप्रभावत्यनुस्मृतः ।
महारुद्राख्ययागेऽस्मिच्छ्रद्धया दीक्षितोऽभवत् ॥ ५ ॥
विप्रान्वव्रे त्रयस्त्रिंशज्जपहोमादिकर्मसु ।
आचार्यत्वे तथा वव्रे कृष्णशंकर भूसुरम् ॥ ६ ॥
वव्रे काशीकरं विप्रं ब्रह्मत्वे घनपाठिनम् ।
ब्रह्मर्षिं श्रीहरेरामं सदस्यत्वे नियुक्तवान् ॥ ७ ॥
महायागे प्रवृत्तः श्रीरेवाशंकर आत्मवान् ।
तदा श्रीशंकराचार्या राजराजेश्वराश्रमाः ॥ ८ ॥
आगत्य शारदपीठा-रूढाः स्वं दर्शनं ददुः ।
यागसिद्धेः शुभं चिह्नमिदं विज्ञेयमद्भुतम् ॥ ९ ॥
दीक्षितः शास्त्रिवर्योऽसौ चतुर्दश्यां सिते दले ।
यागपूर्णाहुतिं कृत्वा सकुटुम्बः प्रमोदताम् ॥ १० ॥
तस्मात्सुयज्ञोत्सवजातहर्षास्तस्मै प्रदद्मोऽतितरां प्रसन्नाः ।
इदं सुपत्रं त्वभिनन्दनाख्यं रुद्रेऽपिसन्दर्शनपूतभावाः ॥ ११ ॥

रेवाशंकरशर्मन् ! या विद्या बाल्ये त्वयाधीता ।
सा दत्ता द्विजबटुषु श्रीदेवीदासपाठशालायाम् ॥ १२ ॥
पात्रतया संप्राप्तं वित्तं यत्तन्नियोजितं भक्त्या ।
भवभयहरभवयागे महारुद्रसंप्रसादसिद्ध्यर्थम् ॥ १३ ॥
ग्रन्था वैदिकधर्ममण्डनपरा ओजःप्रसादान्विता-
लेखा धर्मविरोधिदर्पदलनाः पाखण्डसंखण्डनाः ॥
रेवाशंकर ! ये त्वया विरचिता वाग्यज्ञरूपाः शुभाः ।
तैस्ते शश्वदुदग्रकीर्तिरवनौ जागर्ति भा तेजसा ॥ १५ ॥

---

# धन्या देववाणी ।

लेo—रामनारायणद्विवेदः छात्रः ( मिरजापुरम् )

अयि भारतीयाः संस्कृतसाहित्यसुधापानरसिका देववाणीप्रियाहसाधवो दयालवः—किं भवतामविदितमेतत् यत् परमनिःश्रेयस्करीपरमानन्दप्रदात्री संसारार्णवतारयित्री मनःस्मरणमात्रेण जगत्त्रिविधतापहारिणी अस्माकं प्राणेभ्योऽपि नितान्तं प्रियतमा "देववाणी" ( अत्रोभावपि शब्दौ देवतावाचकौ-तस्माद्विद्यैषा नराणां सर्वार्थसिद्धिदा प्रोक्ता ।)

ननु अस्मिन्नखिले चक्रनेमिवत्परिवर्तिनि सुखदुःखसंयुक्ते प्रख्यातबलपौरुषे महाकालकवलितेऽतिशयविषमे संसारे किञ्चिदपि शाश्वतन्नास्ति-परम्—शुक्तौ रजतवत्समस्तमपि जगत् भ्राम्त्या शाश्वतमिव प्रतिभाति । अत्र किल सर्वासु योनिषु संप्राप्तानाञ्जीवानां सुखमेवैकम्महालक्ष्यम्—तत्र सुखं चतुर्विधं प्रोक्तम्-विषयसुखम्—विद्यासुखम्—ब्रह्मानन्दसुखम्—परमानन्दसुखञ्चेति । तत्र किल विषयसुखं सुलभम् क्षणिकम् दुःखप्रदञ्च । यतश्च पश्वादियोनिगता अपि जीवविषयसुखं लब्धुञ्छक्नुयुः—तस्मात् तत्सर्वथा निन्द्यमेव । उक्तञ्च गीतायाम् श्रीमन्नारायणेन—

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ इति ॥

अपरञ्च 'मोक्तुमिच्छसि चेत्तात विषयान् विषवत्त्यज' इत्याद्यालोचनया-विद्वद्भिरप्रशंसनीयम् विषयसुखम् अपरेषु उच्चरितेषु त्रिविधसुखेषु विद्याया एव

प्राधान्यम्। यया विद्यया जीवास्स्वकर्तव्यरूपं मुक्तिस्वरूपं परमपदं लब्धुं समर्था भवन्ति। यत्परमपदलाभेन जीवाः प्रलयेऽपि अस्मिञ्जन्मजरामृत्युव्यतिकरविषमे संसारे न समायान्ति तत्परमपदप्राप्तये ज्ञानमेव प्राधान्यम्। श्रुतौ प्रतिपादितश्च "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति। "ऋते ज्ञानान्न मुक्तिः" इति च। तज्ज्ञानं विद्ययैव प्रभवितुञ्छक्यम् नान्यथा। विद्यया ज्ञानम् ज्ञानान्मुक्तिः। दुर्गापाठे प्रतिपादितश्च "सा विद्या परमा मुक्तेर्हेतुभूता सनातनी" इत्युक्त्यनुसारेण मुक्तिविषये विद्याया हेतुता प्रोक्ता असौ विद्या चतुरशीति लक्षयोनिषु मनुष्ययोनिगतेनैव जीवेन लब्धुं शक्या। अपरास्सर्वा अपि योनयो विद्याया आधेयाभावाद् विद्यां लब्धुमसमर्था एवं विद्याया अभावात् ज्ञानाभावेन न केनापि योनिजेन परमनिःश्रेयस्करी सा मुक्तिर्लभ्या। किन्तु भूयो भूयोऽस्मिन् विविधविपज्जालजटिले भवार्णवे निमग्नस्सन् जीवो जन्मजरादिरूपदुःखमनुभवति। केवलं याथार्थ्यसुखं मनुष्ययोनिं विना न केनापि योनिजेन लब्धुं शक्यम् केनापि कविवरेण सत्यं भणितम्—

"नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा" इति एवमुक्तेर्हेतुभूता काऽसौ विद्या सा हि पूर्वं महर्षिसुसेविता जगद्विपज्जालविनाशयित्री मुक्तेर्हेतुभूता परमानन्दप्रदात्रीअस्माकं प्राणेभ्योऽपि प्रियतमा शब्दशास्त्रशिक्षयित्री 'देववाणी' वर्तते।

यतश्च वेदोपनिषद्दर्शनादिग्रन्थानधीत्यैव मनुजा ज्ञानँल्लब्धुं समर्थाः नान्यथा। ते च खलु ग्रन्था देववाण्यामेव समुपलभ्यन्ते देववाण्या ऋते कयाचिदपि विधया परमनिःश्रेयस्करपदन्नहि सम्प्राप्तुं समर्था वयम्। तस्मादियम्मे प्राणेभ्योऽपि प्रिया देववाणी एतस्मादेव कारणादस्माकं पूर्वजानामियं विद्या सर्वोत्तमाऽऽसीत्।

भोजराजकाले देवविद्याध्ययनविषये कीदृशी शास्त्रप्रणाल्यासीत् सा सहृदयानां साहित्यरसिकानां विदितमेव प्रोक्तम् यथा।

विप्रोऽपि यो भवेन्मूर्खः स मे स्यान्नगराद् वहिः—
कुम्भकारोऽपि यो विद्वान् स तिष्ठतु पुरे मम। इति

तेषामेव राजश्रेष्ठानां समयेऽयस्कारादीनामपि वालिकास्संस्कृतज्ञा आसन्। तदानीञ्च वयन्तथा देशोऽयमतीवधनधान्यसम्पन्न आसीत्। यदा चास्माकं सर्वश्रेष्ठाया देववाण्या अभ्युदयो भविष्यति। तदैव वयं भारतीया देशश्चायं धनधान्यसंयुक्ता भविष्यामः। अलं वहुवाक् प्रपञ्चेन सर्वज्ञानां भवतां समक्षे इति।

---

# भागवतधर्मोत्पत्तिः ।

ले०—देवसहायत्रिवेदः बी० ए० (साधोलाल रिसर्चस्कालरः)
गोल्डमेडलिस्ट इतिहासशिरोमणिः ।

अयं भागवतो धर्मो भगवता जगद्गुरुणा सृष्ट्यारम्भे कृतयुगे प्रतिपादितः । नष्टप्रायं दृष्ट्वा पुनरपि स एव जगत्कारणप्रभुरवतीर्य धर्मक्षेत्रे कुरुक्षेत्रे ऽर्जुनायेमं धर्ममुपादिदेश । यथा—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ गीता ४–१ ॥
एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

अर्जुनः शङ्कितमनाः पृच्छति—

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

तदा तस्य शङ्कां निवारयन् श्रीभगवानुवाच—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन !
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥

महाभारतान्तर्गत नारायणीयोपाख्याने भागवतधर्म-निरूपणे जनमेजयं प्रति वैशम्पायनः कथयति । प्रथमं भगवत एव सकाशाद् श्वेतद्वीपे ऽसौ धर्मः प्रवर्तितोऽभूत् । यथा महाभारतशान्तिपर्वणि ३४६तमेऽध्याये—

नारदेन तु संप्राप्तः सरहस्यः ससंग्रहः ।
एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप ॥ ६ ॥
एवमेष महान् धर्मः स ते पूर्वं नृपोत्तम ।
कथितो हरिगीतासु समासविधिकल्पितः ॥ १० ॥

अपि चेममेव धर्मं विमनस्कमर्जुनं शिशक्षे भगवान् युद्धभूमौ । (म० भा० शां० ३४८।८) अतो गीताया योगो भागवतधर्मस्यैव । विस्तारभयात् श्रीमद्भगवद्गीतायां सम्प्रदाय-परम्परा सृष्टिमूलारंभान्न दीयते । किन्तु नारायणीय-धर्मस्य परम्परया सर्वं स्पष्टं भवति ॥ ब्रह्मणः सप्तजन्मानि समतीतानि । तत्र

नारायणीयोपाख्याने प्रथमषड्जन्मानि निर्वर्ण्य ब्रह्मणः सप्तमजन्मनि कृत-युगसमाप्तौ—

त्रेतायुगादौ च ततो विवस्वान्मनवे ददौ ।
मनुश्च लोकभृत्यर्थं सुतायेक्ष्वाकवे ददौ ॥ ५१ ॥
इक्ष्वाकुणा च कथितो व्याप्य लोकानवस्थितः ।
गमिष्यति क्षयान्ते च पुनर्नारायणं नृप ॥ ५२ ॥
यतीनां चापि यो धर्मः स ते पूर्वं नृपोत्तम ।
कथितो हरिगीतासु समासविधिकल्पितः ॥५३॥म०भा०शां०३४८

अत एव गीतायां त्रेतायुगस्यैव भागवत-धर्मपरम्परा वर्णिता । श्रीमद्भाग-वतेऽपि कथितम् । ८ । २४

पुराणसंहितां दिव्यां सांख्ययोगक्रियावतीम् ।
सत्यव्रतस्य राजर्षेरात्मगुह्यमशेषतः ॥ ५५ ॥
अश्रौषीदृषिभिः साकमात्मतत्त्वमसंशयम् ।
नाव्यासीनो भगवता प्रोक्तं ब्रह्मसनातनम् ॥ ५६ ॥
स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः ।
विष्णोः प्रसादात्कल्पेऽस्मिन्नासीद्वैवस्वतो मनुः ॥ ५८ ॥

श्रीमद्भागवतेऽन्या परम्परा प्राप्यते या एतद्भिन्नानेति ।

प्रियव्रतो नाम सुतो मनोः स्वायम्भुवस्य यः ।
तस्याग्निध्रस्ततो नाभि ऋषभस्तत्सुतः स्मृतः ॥ १५ ॥
तमाहुर्वासुदेवांशं मोक्षधर्मविवक्षया ।
अवतीर्णं सुतशतं तस्यासीद्ब्रह्मपारगम् ॥ १६ ॥
तेषां वै भरतो ज्येष्ठो नारायण पराक्रमः ।
विख्यातं वर्षमेतद्यन्नाम्ना भारतमद्भुतम् ॥ १७ ॥
स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम् ।
उपासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः ॥ १८ ॥

अयमेव ऋषभदेवो जैनानामादितीर्थङ्करः । असौ जैनधर्मस्त्वतिप्राचीनः । वीतरागजिनो यथेति योगवाशिष्ठे महर्षिवाल्मीकि-कृते । जैनानामहिंसावादे भागवतशास्त्रस्यैवोपदेशः । यथा—

दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं पिबेज्जलम् ।
सत्यपूतां वदेद्वाचं मनः पूतं समाचरेत् ॥ श्री० भा० ११।१८।१६
अहिंसा परमो धर्मः सर्वप्राणभृताम्वर । महाभारतम् ।

देवकीवसुदेवयोः पुत्रः कृष्ण एवादिमो भागवतधर्मप्रतिपादक इति तत्र । वसतीति वासुः । 'वाहुलकादुण्' । वासुश्चासौ देवश्च । अपि च विष्णुपुराणे ।

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयते ॥
वासनात् सर्वभूतानां वसुत्वाद्देव योनितः ।
वासुदेवस्ततो वेद्यो बृहत्वाद् विष्णुरुच्यते ॥ म० भा० ५।६९।३
छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततो ह्यहम् ॥ म० भा० १२।३४१।४१
वसुदेवे शुद्धान्तःकरणे प्रकाश्यते इति वा वासुदेवः ।
तैत्तिरीयोपनिषदि विष्णुगायत्र्यां वासुदेवः पठ्यते ॥
कृष्णस्तु भगवान् स्वयमिति स्मरणात् ।
वसुदेव-सुतस्यापि स्थापनं वासुदेववत् ॥ पञ्चतन्त्रं ३।२९।२८

गीतायामपि च पठ्यते ।

वासुदेवः सर्वमिति स महात्मा सुदुर्लभः । गीता ७।१९

पश्चात्तु स कृष्ण आत्मानं देवकीवसुदेवसुतं निर्दिशति—

वृष्णीनां वासुदेवोऽस्मि । गीता १०।३७

दैविकमानुषिक वासुदेवयोः प्रतिमास्थापनं विभिन्नमेव ।

अथ मानुषं वासुदेवमाश्रये, विमाने मध्यमदशतालमितं सविंशतिशताङ्गुलं द्विभुजं चक्रशङ्खधरं दक्षिणे रुक्मिणीं देवीं तद्दक्षिणे हलमुसलधरं बलभद्रं तद्दक्षिणे प्रद्युम्नं द्विभुजं क्षुरिकाधरदक्षिणहस्तं कट्यवलम्बितवामहस्तं तद्दक्षिणे विरञ्चिं चतुराननं चतुर्भुजं देवस्य वामपार्श्वेऽनिरुद्धं खड्गखेटकधरं तद्वामे साम्बं द्विभुजं दानदक्षिणकरमन्यद्दण्डधरं तस्य वामे च गरुडं कारयेत् । तेषां वर्णाम्बराभरणानि भृगूक्तविधिना कारयेत् । देवानेतान् स्थितानेव संस्थाप्य तद्रूपं कौतुकं कारयेत् । अथवा तेषां मध्ये विष्णुं चतुर्भुजमेव स्थापयेत् ।

दैविकवासुदेवं सिंहासने समासीनं चतुर्भुजं शङ्खचक्रधरं आभूमिभ्यां सहितं तथा देवस्य दक्षिणवामयोः पूर्वोक्तान्देवान्बलभद्रस्य दक्षिणे देवीं रेवतीं प्रद्युम्नस्य दक्षिणे रोहिणीमनिरुद्धस्योषां साम्बस्येन्दुकरीं च सहैव स्थापयेत् । एतेषां कौतुकबिम्बं पूर्ववत्, इति वैखानसागमः ।

वासुदेवपूजनं बौद्धानां निद्देशनाम्नि पुस्तके प्राप्यते । बौद्धानां धर्मपुस्तकानामंशेन ज्ञायते यद् भागवतधर्ममूलं परम्परयातिप्राचीनमासीत् । इयमेव पर-

इपरा वैदिकपुस्तकावलोकनाद् ज्ञायते। * देवप्रियः प्रियदर्शी राजा अशोक इति नाम्ना विश्रुतो लोके आजीविकेभ्यः राजगृहसमीपे गुहादानं चकार। एते आजीविकाः नारायणाश्रिता इति वृहज्जातकटीका। अत एते आजीविका भागवतधर्मानुयायिनो भवितुमर्हन्ति। प्रियदर्शिप्रशस्तयोऽपि भागवतधर्मप्रधानाः। उदयगिरिगुहायां चतुर्भुजदेवस्य मूर्तिः। अत्र ८२ गुप्तसम्वत्सरोल्लेखः। इयं मूर्तिर्वैदिकवासुदेवस्यैव भवितुमर्हति चतुर्भुजत्वात्। गुप्तवंशीया राजानः परमभागवताः। यथा—परमभागवत-महाराजाधिराज-श्रीचन्द्रगुप्तराज्यस्य सम्वत्सरे ८८ (गढ़वाप्रस्तरशिलालेखः)। कथमस्यैव सम्राजः चन्द्रगुप्तद्वितीयस्य प्रियदर्शिप्रशस्तयः (?)। जैना अपि वासुदेवपूजनमतिप्राचीनं मन्यन्ते। घोसुण्डीशिलालेखे (२०० वर्षे विक्रमात्पूर्वे) वासुदेवसंकर्षणमन्दिरचतुर्दिक्षु भित्तिनिर्माणोल्लेखः। हीरादत्तः (Holiodorous) अपि भगवद्भक्त आसीदीति तस्य शिलालेखतो ज्ञायते। यथा—"देवदेवश वासुदेवस्स गरुडध्वजे अयम् कारिते इहेलिओदोरेण भागवतेन दियस् पुत्रेण तक्षशिलकेन योनदूतेन आगतेन महाराजस अंतलिकितस्स उपांता सकासं राणे काशीपुतस्स भागभद्रस भ्रातरस्स वसेन (चतु) देशे राजेन वधमानसं"।

अस्य भागवतधर्मस्य सुदूरसात्वतप्रदेशे गुर्जरप्रान्ते एवोत्पत्तिर्यदुक्तं श्रीजार्जग्रियर्शनमहोदयैरिति तन्न। प्रथमं श्वेतद्वीपे उत्तरस्यां अस्य पूर्वं व्याख्यातत्वात्। नारदस्तु भगवत एव श्वेतद्वीपे ज्ञानं लब्धवान्। ततः काले काले सर्वत्रास्य विस्तारः। श्वेतद्वीपः कुत्र आसीदीति निश्चयेन न ज्ञायते। केचित्तु खृष्टदेशे ब्राह्मणानां प्रस्थानं तस्माद् भागवतभावानयनमिति प्रलाप एव खृष्टमतस्यार्वाचीनत्वात्।

क्षत्रिया एवास्य प्रतिष्ठापकाः काले प्रतिपादकाः समर्थकाश्च इत्यपि न। कंसहिरण्यकशिपुरावणादयः शिवमर्चन्तिस्म ते च विष्णोः प्रतिद्वन्द्विनः। ब्राह्मणा यद्यपि प्रायेण सर्वत्र शिवपूजकास्तथापि भगवद्विरोधका न। विष्वक्सेननारदसनत्कुमाराम्बरीष शाण्डिल्य-प्रह्लादशठगोपसुग्रीव शबरी हनुमतां सर्वेषां नानाजातिलिङ्गवर्णानां भगवद्भक्तिः।

* The sacred book of the Buddhists contain passages showing that the origin of the Bhagavatas was traditionally believed to fall in very remote times and this tradition is supported by indications contained in Brahmanical works. G. Bhuler. Indian Antiquiry XXIII P. 248.

कपिलसिद्धार्थमहावीराः क्षत्रियवंशोत्पन्नाः क्रमेण वेदविरुद्ध सांख्यार्हत-सौगतमतप्रवर्तका ब्राह्मणमतनिन्दकास्तादृशमेव मन्वेदवाकुकृष्णादीनां क्षात्रवंशसंभवानामपि ब्राह्मणमतविरुद्ध भागवतधर्मप्रचारणमत एव ब्राह्मणानां विरोध इति तन्नेति पूर्वोक्तत्वात् । श्रीमद्भगवद्गीतायां यत्र 'राजर्षयो विदुः' (४।२) इत्युक्तं तत्र राजानः ऋषय इवेति विग्रहो न युक्तः । किन्तु 'ऋषीणां राजानः' एव भवितुमर्हति । तत्र च 'राजदन्तादिषु परम्' इति पाणिनिसूत्रेण राजर्षय इति पदस्य सिद्धिः । इत्थमेवान्यत्र राजविद्या राजगुह्यमिति शब्दयोः विद्यानां राजा गुह्यानां राजा च विग्रहौ भवतः । अत एव राजर्षयः राजत्वं परमपदं प्राप्ता मुनय एव । योगवासिष्ठे लिखितम् । (२।११।१६-१८) प्राचीनकाले यदा ऋषयो राजभ्यो ब्रह्मविद्यामुपदिदिशुस्तस्मात्कालादस्या राजविद्याभिधाना इति । अतो भागवतधर्मोऽतिप्राचीन इति सिध्यति ।



# छात्राणाङ्कृते गीताया उपदेशः ।

—:※:—

लेo—रामकृष्णपाण्डेयः व्याकरणशास्त्री ( पन्नास्टेट )

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ १ ॥

अद्यत्वे आर्यसृष्टेरन्तर्हृदि भारतवर्षे श्रीमत्या गीताया किङ्कीदृशं वा स्थानमस्तीति स्तोको भूयान्वा समेषामपरिचयो वरीवर्ति । नास्माकीना छात्रावलिरप्येतच्छून्यान्तःकरणा भव्याभिप्रायहीना भविष्यति । श्रीगीता अस्त्येव दिव्यज्ञानस्याक्षयो निधिः । वेद-वेदाङ्गोपनिषदाद्यखिलागमैर्हि, यद्वृत्तम्भूयस्तरप्रयासेन नावगन्तुम्पार्यते तत्तथा ततोऽप्यधिकं सुगूढतत्त्वं श्रीगीतयाऽत्यल्पसारल्येन सुस्पष्टमुपलभ्यम् ।

तद्विद्धि प्रणिपातेनेति श्रीभगवता कृष्णेन च्छात्रेभ्य केवलं नियमत्रयमुपदिश्यते । श्रीमती गीता, स्वयं 'घटे सागरवत्' अस्ति । तस्यास्तु श्लोकस्तुर्यांशो वा ( विन्दौ सिन्धुः ) इति किम्वदन्तीश्चरितार्थवतीं विदधाति । ते च त्रय इत्थम् (१) प्रणिपातेन (२) परिप्रश्नेन (३) सेवया । तत्राद्यस्तावत्—यथा हस्ताद्विच्युतो लकुटः सर्वाङ्गानि भुवि सम्मेलयति । एवमेव छात्रेणापि गुरुशरणे

स्वीयात्मा लकुटवत्प्रदेयस्तव्यः। न कथञ्चिदन्तर्गर्वश्च स्थाप्यम्। आत्मशुद्धे-र्भावोऽप्यत्र निहितो दृश्यते। एवञ्च श्रद्धा, निर्भरता आत्मशुद्धिश्च छात्राणा-म्प्रथमो नियमः।

द्वितीयः परिप्रश्नेनेति–समीचीनतया प्रश्नकरणेनेत्यर्थः। विद्यामभ्यसता विद्यायां स्वीयम्मनो नियोज्येत्थं व्यवसितव्यं यतस्तन्मनः स्वयं तदीय-निगूढान्भावानधिगच्छेत्। अभ्यसता च तेन हृदि यानि शिक्षाविषयक-सूक्ष्मतत्त्वानि स्फुरन्तु, तानि निःसङ्कोचं गुरुः प्रष्टव्यः। अस्तु, मन-श्चिन्ताशीलं विद्यां प्रति गाढानुरागः प्रश्नकरणे निःसङ्कोचता च छात्रेभ्यो द्वितीयो नियमः।

तृतीयस्तु सेवया—सेवाभावेनेत्यर्थः। करणे तृतीयया सेवाद्वारा इत्यर्थः। गुरुं सेवता ज्ञानस्याक्षयो निधिर्हस्तामलकीक्रियते। अत्रान्यदपि तात्पर्यम्—सेवाकरणं भावयन्तः सञ्जागर्यैव विद्यावाप्तये सचेष्टता विधातव्या, सेवामात्रे चेत्तात्पर्य्यन्तदा तत्प्रणिपात एवान्तर्भवेत्। गीतायाञ्चनैकोऽप्यादेशः संकोचत्वम्भजति किन्तु व्यापकत्वेनारभते। अतस्सेवायास्तात्पर्यं–मानवसेवा-भावम् मनसि कृत्वा ज्ञानप्रेप्सा विधेया। मनसि तेषां चेल्लोकोपकृतिभावना नोत्थास्यति तर्हि–अग्रे गत्वा ते सर्वथाऽऽत्मसेविनस्स्वार्थपरायणाश्च भविष्यन्ति। अतश्छात्रैस्साकमेव परहितं–मानव–सेवाभावो वाऽवश्यं ग्राह्यः एवन्तृतीयनिय-मस्य भावो गुरोः सेवा, परहितव्रतं, मानवसेवा चेति।

एवन्त्रयाणामपि नियमानां वर्णने स्तोकः प्रकाशोऽवश्यम्पातयितव्यः। प्रथमन्तावद्गुरौ साभ्यर्थना पूर्णश्रद्धा, निर्भरता, आत्मशुद्धिश्चावश्यम्भवितुम-र्हति। यदा शिष्यः पूर्णश्रद्धयाऽऽत्मशुद्ध्या च साकं गुरोः शरणं यास्यति स्वीयात्मसमर्पणद्वारा च गुरुम्प्रसादयिष्यति, तदा गुरोरनुकम्पया ज्ञानस्य तीव्रः प्रवाहः प्रसर्तुमारप्स्यते। यदा चाभ्यसितुमारभेत, गुर्वनुकम्पया च ज्ञानप्रवाहो निरस्तप्रकृष्टावरणो भवेत तदाऽन्तेवसता स्वीयं मनो विद्यायां सर्वतोभावेन निरावृति विधेयम्। मनश्च चिन्तनशीलं कार्यम्। एवञ्च तत्स्वान्ते ज्ञानस्य गूढतराण्यपि रहस्यानि स्वयम्प्रफुल्लत्वभांजि स्युः। दशायामेतस्यां यर्हि तत्त्वानि सूक्ष्माणि स्युस्तर्हि तानि सम्यग् बोद्धुं गुरुःनिःसंकोचं यथा स्यात्तथा प्रष्टव्यः। अयमाशयः–ज्ञानगर्वलवोऽपि नायातुं शक्नुयात्–यतो गर्वमेव संको-चस्य प्रधानं कारणम्–अज्ञानस्य च निकटस्थायि। परन्तु सहैव स्वीयस्वान्ते निःस्वार्थत्वजागर्तेरप्युपायो विधेयः। सेवाया हि निःस्वार्थभावेनैव निश्च-

स्वभावः सञ्जागर्ति । एतादृशमुदारत्वं च परहितव्रते मानवसेवाभावे परिणमयितव्यम् । आत्मशुद्ध्यर्थञ्च सर्वाधिकेनावश्यकं ब्रह्मचर्यव्रतस्य पालनम् तदेवञ्च विद्यार्थिनां प्रथमे नियमे गृहीत्वा एतन्महत्त्वं सर्वोपरि कृतं वरीवृत्यते । इदमेव भारतीय-शिष्यानाम्मनोहरं रूपम् ।

---

## शोकाश्रुविन्दवः ।



निखिलभारतवर्षीयसुधीसमाजसमादरणीयाः सुविख्याता न्यायाचार्याः श्रौतस्मार्तकर्मानुष्ठानगुरवो विद्वद्वरिष्ठाः श्रीमन्तो विश्वम्भरदत्तशर्माणो मृगयापुर्यां तपसि मासे कुहूतिथौ भार्गवाहनि दिनान्ते नश्वरं शरीरं परित्यज्य गीर्वाणदनुजयोः परिवर्धमाने विवादे माध्यस्थमुररीकृत्य समग्रमृगयापुरीं शिष्यसमुदायं पण्डितमण्डलीञ्च वंह्मिन शोकोदधौ निपात्य निर्जरनगरीमुपेयिवांसः ।

कैरक्षरैः स्वीयं सन्तप्तहृदयं पाठकानां पुरो विदार्य स्थापयामः । हा ! करालकालव्याल ! त्वं निर्घृणोऽसीति निश्चप्रचम्, यदस्मनस्सोऽसह्यं वज्रमपीपतः । अकाले एव महिष्ठं दुस्साहसिक्यमदीदृशः ।

वयञ्च व्यथितान्तःकरणाः तेषां शोकाकुलपारिवारिकजनानां सविधे समवेदनं प्रकाशयन्तः कथयामः—तदीयाभावजनितक्षतिपूरणं नास्त्यनायाससाध्यं विपश्चित्समुदायेनेति तदात्मनश्चिरशान्त्यै श्रीविश्वेश्वरं सम्प्रार्थयामहे ।

सन्तप्तहृदयः—डा० शङ्करलालशर्मा, शिकारपुर ( सिंध )

---

## समालोचनासारः ।

—:०:—

**नित्यकर्मविधिः**—ग्रन्थोऽयं वासुदेवानन्दब्रह्मचारिणालिखितः, गोपालचन्द्र-वेदान्तशास्त्रिसंशोधितः परिवर्धितश्च । सनातनधर्मावलम्बिनां जीवनं धर्म्ममयमेव तेषां प्रत्येकं कर्म धर्मार्थमेवानुष्ठीयते । तेषामेवोपकाराय नित्यकर्मविधिरयं महाप्रयासेन संगृहीतः प्रकाश्यं नीतश्च । प्रातःकालादारभ्य रात्रिपर्यन्तं यानि कर्माण्यनुष्ठीयन्ते सनातनधर्मभिस्तेषां सर्वेषां मन्त्रसहितानुष्ठानप्रकाराः पुस्तकेऽस्मिन्

विस्तरशो वर्णिताः सन्ति । संक्षेपतोऽस्मिन्नेकस्मिन् ग्रन्थे सनातनधर्मावलम्बिनां सर्वेषामेव नित्यनैमित्तिककर्मणां समावेशो विद्यते । सद्गृहस्थानां विद्यार्थिनां पुरोहितानाञ्चेदं पुस्तकं परमोपयोगीति निःसन्दिग्धम् । प्रतिगृहं पुस्तकमेकम-वश्यमेव संग्राह्यम् । मुद्रणादिकमत्युत्तमम् । पृष्ठसंख्या ३६० । मूल्यमेकरूप्य-कम् । प्राप्तिस्थानम् स्वयम्भातिपुस्तकालय-१०५ सदानन्दबाजार-बनारससिटी ।

**सरलबंगलाशिक्षा**—लेखकः प्रकाशकश्च—श्रीगोपालचन्द्रचक्रवर्तिवेदान्तशास्त्री, प्राप्तिस्थानं—स्वयम्भातिपुस्तकालय— १०५ सदानन्दबाजार बनारस । मूल्यमेकरूप्यकम् पुस्तकस्येयं द्वितीयावृत्तिः । हिन्दीभाषया वंगभाषा-शिक्षणायोपयुक्तमिदं पुस्तकम् । अस्मिन् पञ्च भागा विद्यन्ते, वर्णपरिचयः अनु-बादपद्धतिः, शब्दमात्रा, व्याकरणं कथितभाषा च । वंगभाषायां लिखितभाषातः कथितभाषाया महत् पार्थक्यमास्ते, तत्प्रदर्शनाय अन्तिमोऽध्यायः प्रदत्तः । किञ्चि-न्मनोयोगपूर्वकमस्याध्यायस्य पठनाज्जना वंगभाषाकथोपकथनं कर्तुं समर्था भविष्यन्ति । लेखनप्रणाली चेदृशी सरला यदल्पायासेन, विनापि शिक्षकसाहाय्यं मासाभ्यन्तरे वंगभाषाऽऽयत्ती भवति । भारतीयभाषासु वंगभाषायाः श्रैष्ठ्यमविस-म्वादितम् । जर्मनी-फ्रान्स-जापानादिदेशानां विश्वविद्यालयेषु भारतीयभाषासु च वंगभाषैवैव पाठिता । एशियामहादेशे वंगसाहित्यसम्राट् श्रीयुक्तरवीन्द्रनाथ-ठाकुर एव त्रिंशत्सहस्राऽधिकमुद्रात्मकनोवेलपुरस्कारप्रदानेन सम्बर्धितः । वंगभा-षाया उत्तमोत्तमग्रन्थानां हिन्दीभाषायामनुवादाः प्रकाशिताः । अनुवादित पुस्तकपाठाज्जातोत्सुकाः सज्जना मूलग्रन्थाध्ययनरसास्वादलिप्सवो भवन्ति । तेषामेवोपकारायेदं पुस्तकं प्रणीतम् । ये तु कथञ्चिद्वंगभाषाभिज्ञास्तेषामपीदं पुस्तकं वंगसाहित्यरसाम्बुधौ निमज्जने परमसहायकं भविष्यतीति ।

समालोचकः—अवधेशप्रसादद्विवेदी ( काव्यतीर्थः )

---

## विज्ञापन-नियमाः ।

'सूर्य्योदये' विज्ञापनप्रकाशनार्थम् उपरितनपृष्ठैकस्य कृते १२) रूप्यकम् ।
अर्धभागस्य कृते ६) षड्रूप्यकम् । चतुर्थांशस्य कृते ३) रूप्यकत्रयम् ।
विशेषसौविध्यार्थं सूर्य्योदयव्यवस्थापकपार्श्वे पत्रं प्रेषणीयम् ।
समालोचना-पुस्तकादिकमपि व्यवस्थापक नाम्नैव प्रेषणीयम् ।

---

# अ० भा० संस्कृतविश्वविद्यालयपरीक्षाफलम् (सन् १९३९ ई०)

—:०:—

रोल नम्बर केन्द्र

## व्याकरणाचार्य्यपरीक्षा

### प्रथमविभाग

२७१ लीलापति दिवाकर चांदपुर बिजनौर।

## साहित्याचार्य्यपरीक्षा

### प्रथमविभाग

३१२ सरयूप्रसाद पाण्डेय काशी।

### द्वितीय विभाग

३०७ रामकुमार पाण्डेय काशी।

३५६ शिवकुमार शास्त्री त्रिपाठी ”

## साहित्यशास्त्रिपरीक्षा

### प्रथमविभाग

२७२ श्रोत्रिय मुरारीलाल चांदपुर बिजनौर।

३१० प्राणशंकरदीक्षित काशी।

३३४ गणेशदत्तशर्मा ”

### द्वितीय विभाग

८४ लालमणिमिश्र कानपुर।

१४७ गौरीशंकर भीमजी पुरोहित डी० एल० संस्कृतपाठशाला, बम्बई।

## ज्योतिषमध्यमा

### प्रथम विभाग

१९३ श्रीकमलाकान्त झा बुढ़ानाथ सं० पाठशाला. भागलपूर।

१९४ श्री व्रजकिशोर झा ”

१९५ श्री रमाकान्त झा ”

### द्वितीय विभाग

१११ श्यामलाल शर्मा सनातनधर्म सं० पा० पटा यू० पी०।

११२ देवीप्रसाद शर्मा ”

## शुद्धाद्वैतदर्शनमध्यमा

### प्रथम विभाग

१२० मणिशंकर जगजीवन शर्मा. माणिकबाई सं० वैदिक पाठशाला, पोरबन्दर.

## दर्शनमध्यमा

### प्रथम विभाग

३३ तुरन्तलालपाठक हरिहराम्बाराज्य सं० विद्यालय, अमावां।

| रोल नंबर | | केन्द्र |
|---|---|---|
| | **साहित्यमध्यमा** | |
| | **प्रथम विभाग** | |
| ११० | गोपीनाथ उपाध्याय | सनातनधर्म सं० पा० पटना । |
| १८८ | दामोदरमिश्र | बुढ़ानाथ विद्यालय, भागलपुर । |
| १८४ | रामरत्न दीक्षित | „ |
| | **द्वितीय विभाग** | |
| ३४ | कमलाकान्त झा | हरिहरात्मकाराज्य वि०, अमावाँ । |
| | **व्याकरणमध्यमा** | |
| | **प्रथमविभाग** | |
| ३१ | अयोध्यानाथ झा | हरिहरात्मकाराज्यविद्यालय, अमावाँ । |
| २७८ | श्रीशान्तिदेवी | सनातनधर्म संस्कृत पाठशाला, इटावा । |
| | **द्वितीयविभाग** | |
| २४ | मधुसूदन झा | हरिहरात्मकाराज्यविद्यालय, अमावाँ । |
| ३३ | सूर्यनारायण झा | „ „ |
| ३४ | हेमचन्द्र झा | „ „ |
| ३६ | रामदहिनत्रिवेदी | „ „ |
| | **तृतीय विभाग** | |
| ३७ | जगदानन्द झा | „ „ |
| | **हिन्दीमध्यमा** | |
| | **प्रथम विभाग** | |
| ५६ | राजेन्द्रसिंह चौहान | कुंवरलालसिंह ब्रह्मचर्याश्रम, मैनपुरी । |
| १५४ | विष्णुदत्तशर्मा | श्रीभरतमहाविद्यालय, हृषिकेश । |
| | **द्वितीय विभाग** | |
| ६५ | नन्दलाल ओझा | चूरु बीकानेर । |
| ३०५ | बटुकदेव शुक्ल | बनारस । |
| ३०० | शारदाप्रसाद त्रिपाठी | हित० सं० पाठशाला, जबलपुर । |
| | **व्याकरणप्रथमा** | |
| | **प्रथम विभाग** | |
| १८३ | लक्ष्मीकान्त झा | बुढ़ानाथ सं० वि० भागलपुर । |
| | **द्वितीय विभाग** | |
| २० | त्रियुगी शुक्ल | हरिहरात्मकाराज्य वि०, अमावाँ । |
| ३८ | श्रीनवलकिशोर त्रिवेदी | „ |
| १८६ | चन्द्रशेखर त्रिपाठी | बुढ़ानाथ सं० वि० भागलपुर । |
| १३७ | नर्मदाशंकर ईश्वरजी पुरोहित | डी० एल० संस्कृत पाठशाला, बम्बई । |
| ६० | धन्नालाल जैन | हितकारिणी सं० जबलपुर । |

| रोल नंबर | | केन्द्र |
|---|---|---|
| ११६ | रामगोपाल शर्मा | सना० पाठशाला, पटा । |
| १३२ | सागरदेव कौशिक | डी० एल० संस्कृत पाठशाला, बम्बई । |
| १३६ | रेवाशंकर पुंजालाल उपाध्याय | " " |
| १६६ | गंगाप्रसाद उपाध्याय | श्रीभरत महाविद्यालय, हृषीकेश । |

तृतीय विभाग

| | | |
|---|---|---|
| ६ | दयाराम शुक्ल | शंभुऔषधालय ( गोरखपुर ) जबलपुर । |
| १० | श्यामराव कालवे | " |
| ११ | देवाप्रसाद द्विवेदी | " |
| १२ | देवीप्रसाद द्विवेदी | " |
| १३ | रामनारायण चतुर्वेदी | " |
| १४ | शारदाप्रसाद अवस्थी | " |
| १६ | राजेश्वरराव कालवे | " |
| १७ | शिवप्रसाद त्रिपाठी | " |
| २३ | रामसुरेश द्विवेदी | हरिहरराम्बाराज्य वि०, अमावाँ । |
| २४ | केशव पाण्डेय | " |
| ४३ | मुन्द्रिका पाण्डेय | " |
| ६५ | श्रीयोगधर झा | बुद्धानाथ सं० वि०, भागलपुर । |
| ७७ | यमुनाप्रसाद द्विवेदी | हितकारिणी सं० पा०, जबलपुर । |
| ७८ | सदाशिव त्रिपाठी | " |
| ७६ | हरप्रसाद त्रिपाठी | " |
| ११३ | व्रजकिशोर शर्मा | सनातनधर्म पाठ० पटा । |
| ११४ | गंगाप्रसाद उपाध्याय | " |
| ११५ | श्रीताराम उपाध्याय | " |
| ११७ | रामगोपाल पालीवाल | " |
| ११८ | ओंकारसिंह वर्मा | " |
| ११६ | श्रीरामसिंह चन्देल | " |
| १२१ | मणिशंकर शर्मा | " |
| १२२ | हरगोविन्द शर्मा | माणिकबाई सं० पा०, पोरबन्दर । |
| १२८ | उद्धवजी शर्मा | " |
| १३३ | गजानन्द कृष्णाराम पड्या | डी० एल० संस्कृत पाठशाला, बम्बई । |
| १३४ | कान्तिलाल नाथालाल शुक्ल | " |
| १३५ | जयन्तीलाल भीमजी जोशी | " |
| १५८ | देवीदत्त शर्मा | श्रीभरत महाविद्यालय, हृषीकेश । |
| १६१ | भवानीदत्त जोशी | " |
| १६३ | सत्यनारायण मिश्र | " |
| १६५ | हरिदत्त शर्मा | " |

| रोल नंबर | | केन्द्र |
|---|---|---|
| | | श्रीभरत महाविद्यालय, हृषीकेश । |
| १६८ | माधवेश्वर झा | " |
| १७४ | ईश्वरीदत्त जोशी | " |
| १७५ | तारादत्त पन्त | " |
| १७७ | रामदत्त भट्ट | " |
| १७६ | कीर्तिराम मंजयारी | " |
| १८० | भगतराम | " |
| १८२ | कन्हैयालाल | बुढ़ानाथ वि०, भागलपुर । |
| १८३ | वैद्यनाथशर्मा | सना० स्कूल मुकुन्दगढ़, जयपुर । |
| २५५ | महाबीर प्रसाद गौड़ | " |
| २५६ | ज्वालाप्रसाद गौड़ | " |
| २५७ | गिरधर शर्मा गौड़ | " |
| ३०२ | भगवती प्रसाद | बनारस । |
| ३०३ | विजयनारायणमिश्र | " |

## ज्यौतिषप्रथमा

### प्रथम विभाग

| | | |
|---|---|---|
| १२७ | मणिशंकर शर्मा | माणिकबाई वैदिक सं० पाठशाला, पोरबन्दर । |

### द्वितीय विभाग

| | | |
|---|---|---|
| १२३ | हरिलाल शर्मा | " |
| १२४ | शिवहरलाल शर्मा | " |
| ३३६ | सुन्दरजी शर्मा | " |

## वेदप्रथमा

### द्वितीय विभाग

| | | |
|---|---|---|
| १३४ | कृष्णदेव उपाध्याय | डी० एल० संस्कृत पाठशाला, बम्बई । |

### तृतीय विभाग

| | | |
|---|---|---|
| २५८ | नागरमलशर्मा गौड़ | मुकुन्दगढ़, जयपुर । |

## कर्मकाण्डप्रथमा

### तृतीय विभाग

| | | |
|---|---|---|
| १४१ | रमणलाल पुरोहित | डी० एल० संस्कृत पाठशाला, बम्बई । |
| १४२ | प्राणजीवन महाशंकर शुक्ल | " " |

## साहित्यप्रथमा

### द्वितीय विभाग

| | | |
|---|---|---|
| २८६ | श्रीवैद्यनाथ झा | संस्कृत पाठशाल घोघरडीहा, दरभंगा । |

## हिन्दीप्रथमा

### प्रथम विभाग

| | | |
|---|---|---|
| ५१ | रूपपालसिंह चौहान | कुंवरलालसिंह ब्रह्मचर्याश्रम, मैनपुरी । |

| रोल नंबर | | केन्द्र |
|---|---|---|
| ५० | रामकरनसिंह भादोरिया | कु'वरलालसिंह ब्रह्मचर्याश्रम, मैनपुरी । |
| ५४ | दिग्विजयसिंह चौहान | " |
| २९१ | रामसुमिरन पाण्डेय | सनातनधर्म सं० नीलबाग, बलरामपुर । |
| २९२ | दिवाकरप्रसाद मिश्र | " |
| ३२७ | छगनलाल स्वामी | सरदार शहर, बीकानेर । |

द्वितीय विभाग

| | | |
|---|---|---|
| ४७ | रघुपतिसिंह चौहान | कु'वरलालसिंह ब्रह्मचर्याश्रम, मैनपुरी । |
| ४९ | नरेशचन्द्रसिंह | " |
| ५२ | सुरेशचन्द्र शुक्ल | " |
| ५३ | कैलाशचन्द्रसिंह चौहान | " |
| २८९ | रामलखनमिश्र | नीलबाग, बलरामपुर । |
| २९० | छोटेलाल शुक्ल | " |
| ३२८ | जैसराज शर्मा | सरदार शहर, बीकानेर । |

तृतीय विभाग

| | | |
|---|---|---|
| २९३ | बच्चूलाल पाठक | बलरामपुर । |

कुमारीधर्मप्रवेशिका

| | | |
|---|---|---|
| २८ | श्रीमती शिवकुमारी देवी | हरिहराम्बाराज्य विद्यालय, अमावां । |

धर्मप्रवेशिका

| | | |
|---|---|---|
| २६६ | यमुनादत्तमिश्र | संस्कृत महाविद्यालय, आरा । |
| २६७ | सिद्धेश्वर शर्मा | " |

**बालकृष्णमिश्र,**

( बी० ए०, एल०एल० बी०, काव्यतीर्थ )

प्रोक्टर

अखिल भारतवर्षीय-धार्मिकाध्यात्मिक संस्कृत विश्वविद्यालय परीक्षा,

महामण्डलभवन, जगतगंज, बनारसकैण्ट ।

---

# विश्वविद्यालयान्तर्गत काशी आयुर्वेद-सम्मिलनी परीक्षाफल १९३६ ई० ।

| रोल नंबर | केन्द्र |
|---|---|
| **आयुर्वेदप्रथमा** | |
| ( प्रथमविभागे योग्यतानुसारतः ) | |
| ३१३ हरिप्रसाद चतुर्वेदी | बनारस |
| २१४ श्रीकृष्णचौधरी | तिलुड़ी शिक्षाश्रम बांकुड़ा |
| २१५ श्रीगंगापति गोस्वामी | „ |
| २१२ वीरेन्द्रचन्द्र भट्टाचार्य | „ |
| २१९ शिवदत्त शर्मा | बनारस |
| २१७ शंकरदत्त शर्मा | „ |
| ७४ गदाधरप्रसाद शर्मा | जबलपुर |
| ७५ कमलकुमार जैन | „ |
| ५८ बलबीरसिंह चौहान, श्रीकुंवरलाल-सिंह ब्रह्मचर्याश्रम, मैनपुरी | |
| ५९ प्रतापसिंह बहादुर | „ |
| ५७ विश्वनाथसिंह | „ |
| ६१ भवानीसिंह | „ |
| २६१ श्रीकमला देवी | जयपुर |
| २६४ रामनरेश पाठक | संस्कृत महाविद्यालय, आरा |
| २६५ यमुनादत्त चतुर्वेदी | „ |
| २६९ दयानन्दमिश्र | „ |
| २४८ बालाजी लक्ष्मण कुलकर्णी | नासिक |
| २४९ भीकाजी केशवदेश पाण्डेय | „ |
| ३४५ गोपालदेवी | वेलनगंज, आगरा |
| ३३६ चन्द्रमणि शर्मा | „ |

| रोल नंबर | केन्द्र |
|---|---|
| ३४७ रामसिंह उपाध्याय | आगरा |
| ३५० चन्द्रभान गुप्ता | „ |
| ३२५ चन्द्रदत्त मिश्र | हावड़ा |
| ३३४ नवलकिशोर वर्मा | गोंदिया सी,पी |
| २८८ महाबीर चौधरी | दरभंगा |
| ( द्वितीय विभाग ) | |
| २१६ श्रीशक्तिपदराय | बांकुड़ा |
| २१३ खगेन्द्र कुमार वसु | „ |
| ३३७ महाबीरप्रसाद वैश्य | इटावा |
| २७० लदलीनाराण मिश्र | आरा |
| ३४४ वंशीधर वर्मा | वेलनगंज, आगरा |
| ३४८ रघुनाथप्रसाद दूबे | „ |
| ३४९ विश्वम्भरनाथ | „ |
| ३५१ शिवदत्त शर्मा | „ |
| ३५२ देवीराम शर्मा | „ |
| ३५३ किशनलाल | „ |
| ३५४ सेवारामजी | „ |
| ३५५ बाबूलाल जौहरी | „ |
| ३१८ महाबीर महतो | हबड़ा |
| ३३२ पुनाजी पटेल | गोंदिया सी० पी० |
| २८७ श्रीप्रमोदनारायण झा | दरभंगा |
| ७६ मथुराप्रसाद दीक्षित | जबलपुर |
| तृतीयविभाग | |
| ४० श्रीकपिलदेव मिश्र | अमावां |

| नंबर | केन्द्र |
| --- | --- |
| २२७ भोलादत्त शर्मा | हिवेट सं० पाठशाला गढ़वाल, टेहरी स्टेट |
| २२८ इन्द्रमणि शर्मा | " |
| २२९ श्रीधरानन्द शर्मा | " |
| २७४ शुकचालीलाल | कालपी |

## आयुर्वेदमध्यमा

### प्रथम विभाग

| | |
| --- | --- |
| ८५ हेतराम शर्मा | कानपुर |
| ८६ रामकृष्ण त्रिवेदी | " |
| ८७ रामस्वरूप मिश्र | " |
| ८८ रामनारायण पाण्डेय | " |
| ८९ रामधनी मिश्र | " |
| ७० रघुवंश पाठक | बलिया |
| १०७ देवदत्त शर्मा | स० ध० पा० एटा |
| १०८ सत्यपाल शर्मा | " |
| १०९ सियाराम शर्मा पचौली | " |
| २११ सुबोधचन्द्र राय | बाकुड़ा |
| २३३ विष्णुदत्त शर्मा | आ० चौ० देहरादून |
| २२० विष्णुदत्त मिश्र | काशी |
| २२१ अनंतराम मिश्र | " |
| २२२ भागवत प्रसाद द्विवेदी | " |
| २२३ श्रीरामचन्द्र शर्मा | " |
| २९४ भागीरथलाल | कलकत्ता |
| १९८ राधाकृष्णलाल | रसड़ा, बलिया |
| २९९ रामजीत शर्मा | हावड़ा |

### द्वितीय विभाग

| | |
| --- | --- |
| ९३ मालीराम शर्मा | बीकानेर |
| १०६ मोहनलाल शर्मा | एटा |

| नंबर | केन्द्र |
| --- | --- |
| २२४ बदरीप्रसाद शर्मा | काशी |
| २७५ चन्द्रशेखर त्रिपाठी | कालपी |
| १९९ विश्वनाथ चतुर्वेदी | रसड़ा बलिया |
| २९६ प्यारेलाल शर्मा | हावड़ा |
| ३१९ ईश्वरदयालु द्विवेदी | " |
| ३३३ पन्नालाल, वैश्य | गोंदिया सी. पी |

### तृतीय विभाग

| | |
| --- | --- |
| ९२ मक्खनलाल शर्मा | बीकानेर |
| ९८ देवनारायण पाठक | बलिया |
| २३१ लक्ष्मीप्रसाद | देहरादून |
| २२६ महादेवप्रसाद शर्मा | गढ़वाल |
| ३२१ सत्यनारायन द्विवेदी | हावड़ा |
| ३०८ मानिकचन्द द्विवेदी | बनारस |
| ३२३ जगदीशनारायण मिश्र | हावड़ा |
| ३२९ कुवेरदत्त शर्मा | गया |
| ५ रतनलाल शर्मा | जबलपुर |
| २९५ रामगोपालशर्मा | कलकत्ता |
| ३२४ चिरंजीजी जोशी | हावड़ा |

## आयुर्वेदशास्त्रि परीक्षा

### प्रथम विभाग

| | |
| --- | --- |
| ९१ कालीचरणमिश्र | श्रीनिवास गार्डन कानपुर |
| ९६ गुरुदत्तशर्मा | " |
| ९७ विश्वेश्वरदयाल मिश्र | " |
| ९९ रामसेवक अवस्थी | " |
| १०० सुखनन्दनप्रसाद मिश्र | " |
| १०१ श्यामसुन्दरलाल | " |
| २०९ विनोदबिहारी राय | तिलुड़ी शिक्षालय बांकुड़ा |

| नंबर | केन्द्र |
|---|---|
| २१० करुणामय सरकार | बांकुड़ा |
| २०७ घनश्यामप्रसाद शुक्ल | " |
| २३७ कृष्णदत्त शर्मा | लक्ष्मणगढ़ सीकर |
| २४२ भागीरथ शर्मा | " |
| २४३ मक्खनलाल शर्मा | " |
| २४४ नन्दकिशोर लाटा | " |
| २४५ चतुर्थीलाल खाण्डल | " |

द्वितीय विभाग

| | |
|---|---|
| ९८ कामताप्रसाद पाण्डेय | श्रीनिवास गार्डन, कानपुर |
| १०२ नेमीचन्द जैन | " |
| १०३ हुकुमचन्द जैन | " |
| २०१ चन्द्रचूड़ पाण्डेय | बनारस |
| २०४ कृपालुदत्त पाण्डेय | " |
| ३०४ धर्मनाथ त्रिपाठी | " |
| ३३८ नर्मदाप्रसाद पांडेय | जबलपुर |
| ७ श्रीगणेशप्रसाद द्विवेदी | " |
| ४ रामचन्द्रदास | " |
| २७६ सुखराम पाण्डेय | कालपी |
| २५१ गजानन गौड़ | मुकुन्दगढ़ जयपुर |
| २५२ चतुर्भुजमिश्र | " |

| नंबर | केन्द्र |
|---|---|
| २३५ एम० मुन्डप्पा अलवा | उमा आयुर्वेद फार्मेसी, मंगलोर |
| २३६ एन० श्रीनिवास प्रभु | " |
| २४० रामानन्दन शर्मा | सीकर |
| २४१ माधव शर्मा | " |
| १९७ रामप्यारे उपाध्याय | बलिया |

( वैद्यभूषण )

प्रथम विभाग

| | |
|---|---|
| २३४ स्वामी शिवानन्द | बनारस |

द्वितीय विभाग

| | |
|---|---|
| २०३ प्रभुनारायण पांडेय | बनारस |
| २०५ शीतलप्रकाश ब्रह्मचारी | " |
| २०६ परमानन्द मुनि | " |
| ६ बीरभानु त्रिवेदी | जबलपुर |
| १ रामलालसिंह | " |
| ३२२ महेशचतुर्वेदी | हावड़ा |
| ३४२ भगवतीप्रसाद | बेलनगंज, आगरा |
| ३१८ चन्द्रनारायणलाल | काशी |

आयुर्वेदाचार्य परीक्षा

प्रथम विभाग

| | |
|---|---|
| २९७ बाबूलाल जैन | कलकत्ता |
| ६९ शुभनारायण पाठक | बलिया |

ज्योतिशचन्द्र भट्टाचार्य कविराज सेक्रेटरी,
"काशी आयुर्वेदसंमिलनी, महामण्डलभवन, बनारस ।

---

ऽस्मितारागद्वेषाऽभिनिवेशक्लेशपाशत आत्मानं मोचयितुं शक्नोति । एतदज्ञानजालभेदनोपयोगी सरलतर उपायः प्रणवप्रवेश एव । प्रणवः कथमिव परमात्मवाचको भवतीति पूर्वं विज्ञातव्यम् । तदनु विचारद्वारा चित्ताकाश—चिदाकाश-महाकाशतस्तदविमिश्र-सम्बन्धो बोद्धव्यः । ततश्च कथमिव प्रपञ्चजातं शब्दे, शब्दश्च प्रणवे प्रविशतीति ज्ञेयम् । ततो हि तैलधारवदविच्छिन्नो दीर्घघण्टानिनादवदखण्डो ध्वन्यात्मकः प्रणवः किमिव ब्रह्मप्रकृतौ विलयं गच्छतीत्यनुभवितव्यम् एतद्राजयोगरहस्यावगत्यैव प्रणवप्रवेशक्रिया सिध्यति । यः किल यती राजयोगिनो गुरुदेवस्य कृपया इमां प्रणवजपस्य सिद्धिं प्राप्नोति, तत्र स्वयमेव संन्यासदीक्षावीजस्वरूपप्रैषमन्त्र-निदिध्यासनशक्तिः प्रकटीभवति । तदा भूर्भुवः स्वरिति त्रयाणां लोकानां त्यागस्य का कथा; मनोनाशपूर्वकं सर्वा एव वासनाः साधकस्य समूलं प्रणश्यन्ति । अन्तःकरणस्यैकतत्त्वमय्या आत्मोन्मुखगत्याऽसौ प्रकृतिराज्यमतिक्रम्य स्वयं कृतकृत्यो भवति ।

---

## ४६—हंससाधनोपदेशः ।

साधनावस्थाया अन्तिमा सीमा हंसव्रतम्, अतो लययोगस्योन्नतसाधनानां राजयोगस्य साधनानाञ्च साधनेऽधिकारः हंसव्रतधारिणो यतेर्विहितः । एतेषां साधनानां विस्तृतविवरणं लययोगसंहितायां राजयोगसंहितायां च द्रष्टव्यम् । यावत् स्वस्वरूपोपलब्धिर्न भवेत्तावत्साधनाभ्यासो निरन्तरं करणीयः । सिद्धावस्थाप्राप्तावपि स्वस्वरूपोपलब्धिकर्तृभी राजयोगिभिरपि साधनाभ्यासो न त्यज्यते । अध्यात्ममार्गेऽग्रसरतामारुरुक्षूणां यतीनां कृते साधनमेव निमित्तकारणम् । परञ्च योगारूढा महात्मानोऽपि स्वभावत एव साधनरता भवन्ति । अन्तिमसाधनस्य बीजमन्त्रं प्रणवः लक्ष्यञ्च तस्य चतुर्णां वेदानां चतुर्षु महावाक्येषु प्रस्फुटितमस्ति । महावाक्यानि तेषां विवरणञ्चोपनिषत्तो संगृह्याऽधो लिख्यते ।

नित्यानन्दं परमसुखदं केवलं ज्ञानमूर्तिं
विश्वातीतं गगनसदृशं तत्त्वमस्यादि लक्ष्यम् ।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥

अथ महावाक्यानि चत्वारि । यथा ॐ प्रज्ञानमानन्दं ब्रह्म ॥ १ ॥

ॐ अहं ब्रह्मास्मि ॥ २ ॥ ॐ तत्त्वमसि ॥ ३ ॥ ॐ अयमात्मा ब्रह्म ॥ ४ ॥

ज्ञानं ज्ञेयं ज्ञानगम्यादतीतं,
शुद्धं बुद्धं मुक्तमप्यव्ययं च ।
सत्यं ज्ञानं सच्चिदानन्दरूपं,
ध्याये देवं तन्महो भ्राजमानम् ॥

जीवत्वं सर्वभूतानां सर्वत्राखण्डविग्रहम् ।
चित्ताहङ्कारयन्तारं जीवाख्यं त्वं पदं भजे ॥
जीवे ब्रह्मेति वाक्यार्थं यावदस्ति मनःस्थितिः ।
ऐक्यं तत्त्वं लये कुर्वन् ध्यायेदसिपदं सदा ॥
येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ।
स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥
चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु ।
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥
परिपूर्णः परात्मास्मिन् देहे विद्याधिकारिणि ।
बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥
स्वतः पूर्णः परात्माऽत्र ब्रह्मशब्देन वर्णितः ।
अस्मीत्यैक्य-परामर्शस्तेन ब्रह्म भवाम्यहम् ॥
एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ।
सृष्टेः पुराऽधुनाप्यस्य तादृक्त्वं तदितीर्यते ॥
श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वं पदेरितम् ।
एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ।
स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ।
अहंकारादि देहान्तं प्रत्यगात्मेति गीयते ॥
दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते ।
ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥

अनात्मदृष्टेरविवेकनिद्रामहं मम स्वप्नगतिं गतोऽहम् ।
स्वरूपसूर्येऽभ्युदिते स्फुटोक्तैर्गुरोर्महावाक्यपदैः प्रबुद्धः ॥
वाच्यं लक्ष्यमिति द्विधाऽर्थसरणी वाच्यस्य हि त्वं पदे ।
वाच्यं भौतिकमिन्द्रियादिरपि यल्लक्ष्यं त्वमर्थश्च सः ॥
वाच्यं तत्पदमीशताकृतमतिर्लक्ष्यं तु संच्चित्सुखा-
नन्दं ब्रह्म तदर्थ एष च तयोरैक्यं त्वसीदं पदम् ॥

त्वमिति तदिति कार्ये कारणे सत्युपाधौ ।
द्वितयमितरथैकं सच्चिदानन्दरूपम् ।
उभयवचनहेतु-देशकालौ च हित्वा ।
जगति भवति सोऽयं देवदत्तो यथैकः ॥
कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥
श्रवणं तु गुरोः पूर्वं मननं तदनन्तरम् ।
निदिध्यासनमित्येतत्पूर्णबोधस्य कारणम् ॥
अन्यविद्यापरिज्ञानं अवश्यं नश्वरं भवेत् ।
ब्रह्मविद्यापरिज्ञानं ब्रह्मप्राप्तिकरं स्थितम् ॥
महावाक्यानुपदिशेत् सषडङ्गानि देशिकः ।
केवलं नहि वाक्यानि ब्रह्मणो वचनं यथा ।
हंसो बिन्दूपासनायामधिकारी निगद्यते ।
आत्मपूजा तृतीयस्य प्रोक्ता विद्वद्वरैः सदा ॥
योगेषु च लयः प्रोक्तस्तृतीयस्य मुनीश्वरैः ।
तृयीयो मानसं सम्यग्जपेन्नित्यमतन्द्रितः ॥
सन्त्यजेत्संयमी नूनमध्यासं कारणस्य व ।
तृतीयः पूतहृदयः सर्वसंगविवर्जितः ॥
हंसो भवेत्सर्वथैव तत्तत्संस्कारवर्जितः ।
साधनानां परं तस्य राजयोगोऽस्ति साधनम् ॥
तस्य व्रतमिदं ज्ञेयं निष्कामव्रतमेव हि ।
धारणाऽपि च सा तस्य जगत्कल्याणधारणा ॥
ब्रह्मज्ञानं हि तद्ध्यानं धर्मेषु सकलेष्वपि ।
ऐक्यबुद्धिस्तु बुद्धिः स्यात्सम्प्रदायेष्वपि भृशम् ॥
मित्रे शत्रौ सुखे दुःखे स्त्रियां पुंसि तथैव च ।
स्वर्णे लोष्ठे चषु साम्यं द्वन्द्वेष्वन्येष्वपि ध्रुवम् ॥
समाधिः कथितस्तस्य महामहिमशालिनः ।
असंकल्पाज्जयेत्कामं क्रोधं कामविवर्जनात् ॥
अर्थानर्थेच्छया लोभं भयं तत्त्वावमर्षणात् ।
आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया ॥
योगान्तरायान् मौनेन हिंसां कामाद्यनीहया ।

कृपया भूतजं दुःखं दैवं जह्यात्समाधिना ॥
आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया ।
रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च ॥
एतत्सर्वं गुरौ भक्त्या पुरुषो ह्यञ्जसा जयेत् ।
प्रवृत्तिश्च निवृत्तिश्च मार्गद्वयमुदीरितम् ॥
गार्हस्थ्ये हि प्रवृत्ते वै त्ववसानं निगद्यते ।
निवृत्तेः पूर्णता युक्ता हंसस्यैवाश्रमे ध्रुवम् ॥
यतः परमहंसस्य निस्त्रैगुण्या दशा मता ॥

## ४७—हंसाचारोपदेशः ।

यावन्मनुष्यशरीरस्यास्तित्वं तावत् स्वस्वधर्म्मानुकूलसदाचाराणां पालनमवश्यमेव करणीयम् । उक्तञ्च गीतोपनिषदि—

तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर ।
असक्तो ह्याचरन्कर्म्म परमाप्नोति पूरुषः ॥
कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥
न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त्त एव च कर्म्मणि ॥
काम्यानां कर्म्मणां न्यासं सन्न्यासं कवयो विदुः ।
सर्व्वकर्म्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥
त्याज्यं दोषवदित्येके कर्म्म प्राहुर्मनीषिणः ।
यज्ञ दानतपः कर्म्म न त्याज्यमिति चापरे ॥
निश्चयं श्रृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ॥
यज्ञदानतपः कर्म्म न त्याज्यं कार्य्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥
नियतस्य तु संन्यासः कर्म्मणो नोपपद्यते ।

मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ॥
दुःखमित्येव यत्कर्म्म कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥
कार्य्यमित्येव यत्कर्म्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलञ्चैव स त्यागः सात्त्विको मतः ॥
न द्वेष्ट्यकुशलं कर्म्म कुशले नानुसज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥
न हि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः ।
यस्तु कर्म्मफलत्यागी स त्यागीत्यभिधीयते ॥

यथा यथाध्यात्मिकोन्नतिसोपानारोहणं विज्ञजनैः क्रियते, तथा तथैव त लोककल्याणान्नाधिकं प्रयतितव्यम् । आचारधर्म्मो लोकहितकरोऽप्यत एव सर्वश्रेष्ठहंसव्रतपरायणैः सन्न्यासिभिः जगत्कल्याणबुद्ध्या आचारपालन-तत्परैर्भवितव्यम् । हंसधर्म्मावलम्बिनः सन्न्यासिनः केचनाचारा अधोलिख्यन्ते ।

## ( हंसाचारोपदेशः )

संन्यासी ज्ञानवान् हंसो विधाय भ्रमणं मुदा ।
संसारे ज्ञानविस्तारं कुर्यादेव प्रयत्नतः ॥
हंसः परमहंसश्च यदीच्छन्तावुभौ तदा ।
क्षौरं प्रत्ययनं कर्तुमर्हतः पूतमानसौ ॥
एकदण्डं तृतीयस्तु धारयेत्सततं शुचिः ।
एकवारं तृतीयस्तु स्नानं कुर्यादतन्द्रितः ॥
तृतीयः श्रद्धया भस्म धारयेत्पूतमानसः ।
तृतीयस्य तु विज्ञेया वृत्तिराजगरी शुभा ॥
आचार्यस्य गुरोश्चापि कार्यं कुर्यात् तृतीयकः ।
सूत्र-शून्यो भवेद्धंसः स्वेच्छाधीनैव तज्जटा ॥
पूज्यो भवेत्तृतीयस्तु नियतमाद्ययोर्द्वयोः ।
नद्यां क्षेपस्तृतीयस्य क्षित्यन्तर्वा निवेशनम् ॥
नारायणस्वरूपं तु स्पृष्ट्वा होमानलं स्वयम् ।
गृह्णीयाद्धंस-संन्यासी व्रतं परमभद्रदम् ॥
यदा तु जायते विप्राः तत्त्वज्ञानस्य योग्यता ।
बहूदको भवेद्धंस स्तदात्मानं समुन्नयन् ॥

यदा च योग्यताप्राप्ति र्मनोनाशस्य जायते ।
तदैव हंसावस्थायां विचरेद् योगिराड् मुदा ॥
यद्येवं योग्यता न स्यात्तदा पूर्वोक्तयोर्वसेत् ।
हंसाधिकारे तत्त्वज्ञः निष्कामव्रततत्परः ॥
ब्रह्म मत्वा जगद्रूपं कर्मयोगी मनो जयन् ।
जगत्यां सत्यधर्मस्य तत्त्व-ज्ञानस्य चैव हि ॥
विस्तारे यत्नमादध्याद् व्रती भूत्वा निरन्तरम् ।
अस्यां दशायां संन्यासी उन्नतं लभते पदम् ॥
जगद्गुरोः प्रतिनिधेर्महनीयं महर्षयः! ।
दृष्टानुश्रविकाभ्यां चेद् विषयाभ्यां यदा नृणाम् ॥
परवैराग्यसम्प्राप्तिस्तदा हंसव्रतं चरेत् ।
पराभक्त रहस्यं हि ज्ञात्वा साधकसत्तमः ॥
तत्त्वज्ञानं चानुभूय तदा हंसव्रतं चरेत् ।
उत्तरोत्तरमेतेषामाश्रमाणां विधारणे ॥
ज्ञानाधिकारप्राधान्यं न कालस्य प्रधानता ।
संन्यास्येतज्जगन्मान्यं धृत्वा हंस-महाव्रतम् ॥
लभते ह्युत्तमां विप्राः! पदवीं वै जगद्गुरोः ।
स निष्काम-कर्म-योग-व्रतं धृत्वा महीं चरन् ॥
लोककल्याणकर्तार-मुपदेशं ददत्तथा ।
दीक्षादानं महत्कुर्वन्नभयं च प्रचारयेत् ॥
जगत्-कल्याणबुद्ध्यैव केवलं देहधारणम् ।
तपः समीरितं तस्य सर्वप्राणिहितैषिणः ॥
ज्ञानोपदेशाज्जीवेभ्य स्त्वभयं दानमुत्तमम् ।
दानं स्वभावजं विद्धि तत्तस्य .विदितात्मनः ॥
तदैव सम्भवस्त्वस्या उन्नताया विशेषतः ।
दशाया हंससंज्ञाया यदा द्रष्टृत्वमाप्नुयात् ॥
हंसस्य कर्मणां सप्त भूमिकायास्तथैव च ।
उपासनायाः सप्तानां भूमिकानां मुनीश्वराः ॥
भूमिकानाञ्च सप्तानां ज्ञानस्य परमर्षयः ।
रहस्यं स्यात्तस्य सप्त दर्शनानां च हृद्गतम् ॥
चतुर्णां योगमार्गाणां स स्याच्च पथदर्शकः ।

संन्यास्येतदवस्थाढ्यो मनसि प्रलयं गते ॥
उन्नतायां दशायां हि ब्रह्मसद्भावमृच्छति ॥
पूजनीयोऽधिकं त्वेषु परः पर इति स्मृतिः ।
अन्तिमस्तु विशेषेण साक्षाद् ब्रह्मस्वरूपभाक् ॥
हठ-मन्त्र-लयानां वै योगानां च यदा भवेत् ।
आचार्यस्तत्त्वविद्‌योगी तदा हंसव्रतं चरेत् ॥
राजयोगे यदा पूर्णाधिकारी योगिराड् भवेत् ।
स महापुरुषो विप्राः ! तदा हंसव्रतं चरेत्, ।
भूमिका कर्मयोगस्य शुभेच्छा प्रथमा स्मृता ।
विचारणा द्वितीया स्यात् तृतीया तनुमानसा ॥
सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
परार्थभावनी षष्ठी सप्तमी तुर्यगा स्मृता ॥
पूर्णज्ञानं विनैतासां राजयोगी भवेन्नहि ।
उपासनाया भक्तेश्च भूमिका गदतः शृणु ॥
प्रथमा भूमिका नाम परा रूपपराऽपरा ।
स्याद्विभूतिपरानाम्ना तृतीया भूमिका मता ॥
तथा शक्तिपरा नाम चतुर्थी भूमिका भवेत् ।
एवं गुणपरा ज्ञेया भूमिका पञ्चमी बुधैः ॥
षष्ठी भावपरा ज्ञेया सा स्वरूपपरान्तिमा ।
पूर्णज्ञानं विनैतासां राजयोगी भवेन्नहि ॥
ज्ञानस्य भूमिका विप्राः! इमाः सर्वाः प्रकीर्तिताः ।
ज्ञानदा ज्ञानभूमेर्हि प्रथमा भूमिका मता ॥
संन्यासदा द्वितीया स्यात्तृतीया योगदा भवेत् ।
लीलोन्मुक्तिश्चतुर्थी वै पञ्चमी सत्पदा स्मृता ॥
षष्ठ्यानन्दपदा ज्ञेया सप्तमी तु परात्परा ।
पूर्णज्ञानं विनैतासां तद्वच्चानुभवं विना ।
सम्बन्धज्ञानमन्योन्यमेतासामन्तरा तथा ॥
कथञ्चिदपि संन्यासी राजयोगी भवेन्नहि ।
चतुर्धा गुरवो ज्ञेया स्तत्र शिक्षागुरुः खलु ।
व्यावहारिक-शिक्षायाः प्रवर्तक उदाहृतः ॥
विद्यागुरुर्यो वेदादि शास्त्रमध्यापयेत्सुधीः ।

दीक्षागुरुर्यः शिष्यान् स्वान् योजयेदवधानतः ॥
कर्मोपासनयोर्मध्येऽन्यतरस्मिन् विधानतः ।
जगद्गुरुः स विज्ञेयः शिष्यानुपदिशन् हि यः ॥
ब्रह्मविद्यां नयेत् कालं लोकसंग्रहणेच्छया ।
पूजनीयोऽधिकं त्वेषु परः पर इति स्मृतिः ॥
अन्तिमस्तु विशेषेण साक्षाद्ब्रह्म स्वरूपभाक् ।
सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते ॥
दर्शनेन विहीनस्तु संसारं प्रतिपद्यते ।
अहिंसयेन्द्रियासङ्गै वैदिकैश्चैव कर्मभिः ॥
तपसश्चरणैश्चोग्रैः साधयन्तीह तत्पदम् ।
येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥
तत्सूत्रं धारयेद् योगी योगवित्तत्त्वदर्शिवान् ।
बहिःसूत्रं त्यजेद् विद्वान् योगमुत्तममास्थितः ॥
ब्रह्मभावमिदं सूत्रं धारयेद् यः सचेतनः ।
धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ॥
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ।
ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ॥
ज्ञानशिखा ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥
गुणत्रयस्य या नित्या धारणा तत्त्रिदण्डकम् ।
यद्वाऽध्यात्माधिदैवाधिभौतिकत्रयधारणम् ॥
बुधास्त्रिदण्डमाहुर्वै तयोरन्तिममुत्तमम् ।
प्रकृतेःपुरुषस्यापि द्रष्टु दृश्यस्य चैव हि ॥
धारणां प्राहुरात्मज्ञा द्विदण्डमिति शब्दतः ।
स्वरूप-ज्ञानमात्रेऽत्र स्थितिर्यस्य द्विजन्मनः ॥
एकदण्डी सविज्ञेयः सर्वस्मादपि चोत्तमः ।
तेषामेव स्मारका वै स्थूलदण्डा इमे मताः ॥
दण्डं तु वैणवं सौम्यं सत्वचं समपर्वकम् ।
पुण्यस्थलसमुत्पन्नं नाना कल्मषशोधकम् ॥
अदग्धमहतं कीटैः पर्वग्रन्थिविराजितम् ।
नासादघ्नं शिरस्तुल्यं भ्रुवोर्वा बिभ्रियाद्यतिः ॥

# दुर्गासप्तशत्या अष्टविधाः टीकाः ।



विदितमस्तु पाठकानां यत्-सूर्योदयस्य विशेषाङ्कस्वरूपेण दुर्गासप्तशत्याः सप्तटीकाभिः सह श्रीमहामण्डलशास्त्रप्रकाशविभागद्वारा सम्पादितं नूतनटीकोपेतं सुमनोहराक्षरैर्मुद्रितं दुर्गासप्तशतीपुस्तकं पुनर्मुद्रितं सत् सर्वेषां पाठकमहोदयानां सेवायां समुपस्थापयितुं विद्यते विचारः संचालकानाम् । येन सम्यक् पुराणरत्नस्वरूपं ज्ञातं स्यादिति तत् दुर्गासप्तशतीपुस्तकं साधु सम्पाद्य अद्यावधि यावन्त्योऽपि तत्र शोभना उपादेयाष्टीकाः सन्ति ताः सर्वा अपि संगृह्य पुराणसमन्वय-व्याख्याविभूषितं कृत्वा संग्रहणीयं पुस्तकरत्नं सम्पादयितुमभिलाषोऽस्ति । पुस्तकमिदं सूर्योदयाकारतो महत् शतद्वयात्मकपृष्ठतोऽप्यधिकं भविष्यतीति विश्वासोऽस्माकम् । आशास्महे च भगवती जगदम्बिका मनोरथानस्माकं पूरयिष्यतीति ।

---

# परीक्षा-नूतन-केन्द्रस्वीकृतिः ।

वर्षे ऽस्मिन् निम्नलिखितानि परीक्षाया नूतनकेन्द्राणि स्थापितानि । येषां नामनि पूर्णसंकेतसहितानि प्रकाश्यन्ते ।

( १ ) पण्डित लीलाधरमिश्रशास्त्री, प्रधानाध्यापकः श्रीयागेश्वर संस्कृतविद्यालय, डिबाई, बुलन्दशहर ।

( २ ) साहु नाथूलाल जैन, आनरेरी सेक्रेटरी परमार्थसंस्थान ऋषभदेव (मेवाड़)

( ३ ) पण्डित भुवनेश्वरशर्मा शास्त्री, भारतीभवन, कायस्थपुरा, भोपाल ।

( ४ पं० उमाकान्तशर्मा द्विवेदी, संस्कृतपाठशाला, सैदपुर, गाजीपुर ।

( ५ ) रामजी लाल शर्मा, मटरूमलगायनका आयुर्वेदविद्यालय, फीरोजाबाद ।

( ६ ) पण्डित रंगलाल जी ओझा, श्रीवशिष्ठ आयुर्वैदिकविद्यालय, कराची ।

( ७ ) पण्डित श्रीधरशर्मा श्रीकृष्णब्रह्मचर्याश्रम, बरौली, जिला छपरा ।

( ८ ) पण्डित द्वारिका प्रसाद शास्त्री, गोवर्धन आयुर्वेदभवन, काहूकोठी कानपुर ।

( ९ ) पंडित बागेवाडीकर शास्त्री, बड़गांवकर संचाल, सोलापुर ।

(१०) पं०रामरत्न शर्मा आयुर्वेदाचार्य, श्रीरत्न फार्मेसी, अमृतसर ( पंजाब ) ।

## सूर्योदय नियमाः ।

(१) सूर्योदयः प्रतिपौर्णिमं प्रकाशितो भवति । ये पञ्चरूप्यकात्मकं ५) वार्षिकं साहाय्यं करिष्यन्ति ते संरक्षका भवितुमर्हन्ति । वार्षिकं मूल्यं भारते मुद्रात्रयम् ३) वैदेशिकेभ्यः ६) असमर्थेभ्यो विद्यार्थिभ्यः पुस्तकालयेभ्यश्च १) रूप्यकेणैकेनेदं पत्रं प्रदीयते ।

२—धनादेशपत्र ( मनिआर्डर ) द्वारैव मूल्यप्रेषणं साधीयोऽन्यथा वी० पी० मध्ये ।=) षडाणकानां व्यर्थव्ययो भवति ।

(३) ग्राहकैः प्राचीनैः स्वीया ग्राहकसंख्या, नवीनैश्च 'नवीनोऽहम्' इति नूनं लेख्यम् । अन्यथा पत्रप्रेषणे तथाऽन्यव्यवस्थाविधाने च महान् विलम्बो भवेत् । तेषां समीपे समुचितसमये सूर्योदयो न गच्छेत् तैः पत्रालये ( पोस्ट आफिस ) अन्वेषणानन्तरं शीघ्रं सूचना देया । धनादेश-( मनिआर्डर ) द्वारा स्वपूर्णसंकेतं सुस्पष्टं विलिख्य सूर्योदय-मूल्यं प्रेषणीयम् । अत्र विज्ञापन-दानेन महीयसो लाभस्य सम्भावना । विज्ञापननियमाः पत्रं प्रेष्य ज्ञेयाः । सूर्योदये मुद्रापणीयानि निबन्धादीनि तत्सम्बन्धीयपत्राणि, कार्यालय व्यवस्था-विषयकदलानि च " श्रीअवधेशप्रसादद्विवेदी कार्याध्यक्ष-सूर्योद-कार्यालय जगत्गञ्ज, बनारसकैण्ट " इति संकेतेन प्रेषणीयानि ।

---



Printed by Pt. Janki Sharan Tripathi at the Surya Press, Benares City.
Published by Pt. A. P. Sharma, Bharatdharmamahamandal, Benares.